# शब्दशक्तिप्रकाशिका ।

महामहोपाध्याय

श्रीजगदीश तर्कालङ्कार भट्टाचार्य्येण

विरचिता ।

वि, ए उपाधिधारिणा, पण्डितकुलपतिना

श्रीजीवानन्दविद्यासागर भट्टाचार्य्येण

संस्कृता प्रकाशिता च ।

द्वितीयसंस्करणम् ।

कलिकातानगर्य्यां

१० नं० शम्भु चन्द्र चाटुर्य्येर ष्ट्रीटस्थ निउआर्य्यमिशन यन्त्रे,

इउ, रचितेन मुद्रितम्।

ई १९०४




पण्डितकुलपतिः

**श्रीजीवानन्दविद्यासागर बि, ए,**

*PANDIT JIBANANDA VIDYASAGARA B. A.*

*Superintendent Free Sanskrit College, Calcutta.*

# शब्दशक्तिप्रकाशिका ।

तर्कं तन्त्रञ्च विदुषा विदुषां तोषकारिका ।
क्रियते जगदीशेन शब्दशक्तिप्रकाशिका ॥

ग्रन्थारम्भे विघ्नविघाताय समुचितां शब्दमयीं देवतां ग्रन्थकृत् स्मरति स्म ।

अनुभवहेतुः सकलैःसद्यः समुपासिता मनुजैः ।
साकाङ्क्षासन्ना च स्वार्थे योग्या सरस्वती देवी ॥

इतरा तावद्देवता सम्यगुपासिताप्युपासके न साकाङ्क्षा साकाङ्क्षापि वा नासन्ना आसन्नापि या न स्वस्योपासितुरभिलषितार्थे योग्या योग्यापि वा न समस्तोपासकेऽनुभवस्य जनिका जनिकापि वा न सद्यः किन्तु कालक्रमेणैव सरस्वती तु देवी सकलमनुजे एव साकाङ्क्षा आसन्ना योग्या चोपासिता सती सद्य एवानुभवं तनुते अतो देवतान्तरमपेक्ष्योत्कर्षवतीयमवश्यमुपास्येत्यत्र तात्पर्य्यम् ।

अथ शब्दो यदि स्वार्थस्यानुभवे भवेद्धेतुः प्रात्यक्षिक एवोपनयिके तत्र नाकाङ्क्षाद्युपयोगस्तद्भिन्ने चेदानुमानिकएव न च तत्र सद्यः साकाङ्क्षत्वादिधीमात्रेण व्याप्तिबुद्ध्यादेरप्यधिकस्यापेक्षणादित्याशङ्कामपनेतुमन्वयबोधनामकमनुभवान्तरं दर्शयति ।

साकाङ्क्षशब्दैर्यो बोधस्तदर्थान्वयगोचरः ।
सोऽयं नियन्त्रितार्थत्वान्न प्रत्यक्षं न चानुमा ॥

अस्ति तावन्नीरस्ति गामानयेत्यादिसाकाङ्क्षशब्देभ्यः स्वस्ववृत्त्या पदार्थानामुपस्थित्युत्तरं गवादावस्तित्वादेरन्वयावगाही विलक्षणो बोधो यत्रान्वयव्यतिरेकाभ्यामाकाङ्क्षादिमत्तया शब्दस्यावगमोहेतुर्न तु पदार्थानामुपस्थितिमात्रं विशिष्टमतेरानुभविकत्वादन्यथानुमितेरप्यपलापापत्तेः। न चासौ स्मृतिः समानाकारसंस्काराप्रभवत्वात् नापि साक्षात्कारः साकाङ्क्षपदैरेनैव प्रकारान्तरेणाप्युपस्थितार्थस्योपनयमर्य्यादयावगाहितापत्तेः न चेष्टापत्तिरनुभवविरोधात् तदुत्तरं तथाविधानुव्यवसायापत्तेश्च। तत्तदर्थविषयकत्वेन शाब्दमतेरनुव्यवसायं प्रति तत्तदर्थसाकाङ्क्षपदजन्यतद्गोचरशाब्दत्वेन विषयविधया हेतुत्वकल्पनायामतिगौरवात् इतरबाधलव्यस्या छिद्रेतरत्वादेरपदार्थस्यापि अवगाहित्वेन शाब्दमतेरनुव्यवसीयमानत्वात् गवादावस्तित्वादेरिवास्तित्वादावपि गवादेर्भानप्रसङ्गस्य तावताप्यनुद्धाराच्च। अतएवासौ नानुमितिरपि पूर्वपरामृष्टस्य वस्तुमात्रस्यैवासति बाधके शाब्दधीविषयतापत्तेः। न च तत्तदर्थगोचरशाब्दधियं प्रति साकाङ्क्षपदजन्याया स्तत्तदर्थगोचरस्मृतेः कारणत्वकल्पनान्नैष दोषः तावतापि पदार्थानामन्वयधीदशायामपदार्थानामपि स्वसामग्रीबलेन प्रत्यक्षानुमित्योरन्यतरप्रसङ्गस्य दुर्वारतापत्तेः शाब्दधियः प्रत्यक्षत्वाभ्युपगमे प्रत्यक्षादिसामान्यं प्रति शाब्दसामग्र्याः प्रतिबन्धकत्वासम्भवात् शाब्दान्यप्रत्यक्षत्वाद्यवच्छिन्नं प्रति तस्यास्तथात्वमपेक्ष्य शाब्दधियः प्रत्यक्षादिभिन्नत्वकल्पनायामेव लाघवाच्च।

अथ लिङ्गजन्यत्वेनान्वयबुद्धेरनुमितित्वसिद्धावनायत्या शाब्दान्यानुमित्यां तत्सामग्र्याः प्रतिबन्धकत्वं वाच्यमतो लिङ्गजत्वमेव शाब्दधियः खण्डयति।

योग्यतार्थगताकाङ्क्षा शब्दनिष्ठानुभाविका।
प्रत्येकं वा मिलित्वा वा नैते लिङ्गनसिद्धितः॥

गवादावस्तित्वादेरनुभवार्थं न तावदस्तित्वादेर्बाधविरहित्वरूपं योग्यतामात्रं लिङ्गं बाधनिश्चयाभावेनान्यथासिद्धस्य योग्यतानिश्चयस्यानावश्यकत्वात् योग्यतामात्रलिङ्गकसंसर्गानुमानस्यान्वयबुद्धित्वे घटः कर्मत्वमित्यादिस्थलीयस्यापि तस्य तथात्वापातात् योग्यतायाः संशयस्थलेऽप्यन्वयबुद्धेरानुभविकत्वाच्च। गवादावस्तित्वादेरन्वयबोधानुकूलानुपूर्व्यपर्य्यसिता त्वाकाङ्क्षा स्वयमसिद्धा कथमस्तित्वादेरन्वयबोधं साधयेत् अतएव अस्तित्वादेर्योग्यताविशिष्टमप्याकाङ्क्षावत्त्वं न तदन्वयस्यानुमापकमप्रसिद्धेः। अथ गौरस्ति तावान् स्वधर्मिकास्तित्वान्वयबोधानुकूलाकाङ्क्षाश्रयपदस्मारितत्वात् घटवत् अस्तिपदसमभिव्याहृतगौः पदस्मारितत्वाद्वा चक्षुर्वदित्याद्यनुमानत एवास्त्वन्वयधियोऽन्यथासिद्धिः पदानामेकवाक्यतापन्नत्वरूपसमभिव्याहृतत्वनिश्चयं विना न्यायनयेऽप्यन्वयबोधस्यानुत्पत्त्या पूर्वं तस्यावश्यकत्वात्। न च विनष्टे भाविनि वा घटे चक्षुरादौ व्यभिचारः स्वार्थानुमाने स्वरूपतस्तस्याकिञ्चित्करत्वात् एकविधव्यभिचारज्ञानसत्त्वेऽप्यन्यविधव्याप्तिनिश्चयस्य सम्भवाच्च समानाकारस्यैव व्यभिचारग्रहस्य व्याप्तिधीविरोधित्वात् इति नव्यवैशेषिकाः। तन्न। गवादेः पदस्मारितत्वाद्यभावग्रहदशायामुत्पन्नस्य गौरस्तीत्याद्यन्वयबोधस्योक्तहेतुनाप्यनिष्पत्तेः पदजन्या हि पदार्थस्मृतिः स्वरूपसत्येवान्वयबुद्धावुपयुज्यते न तु ज्ञाता प्रमाणाभावात् पदे स्मारितस्यापि तत्स्मारितत्वग्रहदशायामन्वयधीप्रसङ्गाच्च। एतेन गौःपदमस्तित्ववद्गोगोचरज्ञानपूर्वकम् अस्तिपदसाकाङ्क्षगौःपदत्वात् यन्नैवं तन्नैवं यथाकाशमित्येवं पदपक्षकमप्यनुमानं कणभच-

पक्षानुसारिणाम् अपास्तं गवादिपदानां ज्ञानपूर्व्वकत्वाद्यभा
निश्चयदशोत्पन्नस्य गवादिमुख्यधर्म्मिकास्तित्वाद्यन्वयबोधस्य
जनीनस्योक्तलिङ्गादप्यनिष्पत्तेः वाक्यार्थस्यापूर्व्वत्वेन त
साध्यस्य प्रायशः प्रागनुपस्थित्यानुमानायोगाच्च। व
वाक्यार्थबोधस्यानुमितित्वे सत्येव साकाङ्क्षपदत्वादिलिङ्गक
कल्प्यं तदेव त्वसिद्धं प्रमाणाभावादस्तित्वेन गामनुमि
मीत्यादेरनुव्यवसायस्य तत्रासत्त्वात् प्रत्युत गौरस्तीतिवाक्य
दस्तित्वेन गौः श्रुतो नत्वनुमित इत्यनुभवाच्च। श्रोतव्यो मन्त
इत्यादिप्रयोगदृष्ट्या शाब्दत्वस्यापि शृणोतेः शक्यतावच्छेदं
कत्वात्। नचासौ भ्रान्तिर्बाधकाभावात्। न चेदेवमनु
मितिमात्रस्य पदजन्यत्वं प्रकल्प्य अन्वयबोधत्वं किमिति न
रोचयेः अनुमिताविवान्वयमतावपि समानविषयकप्रत्यक्ष
सामग्र्यादेश्च प्रतिबन्धकतया तदभावजन्यत्वेनैकशेषस्य दुष्क
त्वात् पटादिपदैरर्थस्य पटादेः स्मरणे सति तदीयव्याप्ति
दहनाद्यर्थस्तदर्थकवह्न्यादिपदस्य स्मरणोत्तरं तदीयाका
द्यवगमस्य सुवचत्वात् वाच्यतावद्वाचकत्वस्यापि सम्बन्ध
स्मारकतायामविशिष्टत्वात्। नच ह्रदे धूमाभाव इत्या
प्रसिद्धसाध्यकानुमितिस्थले पूर्व्वं साध्यस्यानुपस्थित्या
साध्यवाचकपदस्य स्मरणासम्भव इति वाच्यं तत्र साध्यप्र
विरहेऽपि उद्बोधकान्तरात् साध्यवाचकपदस्मरणसम्भवात्
घटाद्यन्य इत्यादिवाक्याद्घटप्रतियोगिताकान्यत्वादिप्रका
निरवच्छिन्नविशेष्यताको घटान्यस्य बोधः सर्व्वजनसिद्धः
चास्माकं तादृशानुपूर्व्वीकपदज्ञानत्वेन तथाविधान्वय
प्रति हेतुत्वादुपपद्यते परेषान्तु भेदो घटप्रतियोगिताक
काङ्क्षान्यादिपदस्मारितत्वादित्यादिरीत्या अनुमित्या न त
र्वाहः पक्षविधयान्यत्वस्य भानेऽप्यन्यत्वप्रकारेणान्यस्य तत्र

न् । न च तत्रान्यपदमेव घटान्यत्वप्रकारेण घटान्यस्य लक्षकं दित्यस्य व्यर्थतापत्तेः अन्यथा घटोऽस्तीत्यादावपि घटादि-स्यैवास्तित्वादिविशिष्टघटादिलक्षकत्वसम्भवात् तत्राप्यस्तित्व-योरन्वयबोधापलापापत्तेरित्यास्तां विस्तरः ।

साकाङ्क्षत्वादिधीरिव वाक्यार्थगोचरयथार्थज्ञानवदुक्तत्वरूप-प्तोक्तत्वस्यापि निश्चयः शाब्दधीहेतुरतो नैकपदार्थधर्मिको-पदार्थस्यान्वयबोधोऽनुमितिः सिद्धिसत्त्वे विनानुमित्सां म्भवात् परन्त्वनुमितेरन्य एव किञ्चित्तौ उद्द्योतग्राहित्वान्न यज्जातीयविशिष्टज्ञानत्वावच्छेदेन समानाकारनिश्चयो-च्छेदं तज्जातीयान्ययथार्थज्ञानस्यैवागृहीतग्राहित्वेन प्रमात्वात् एवं धारावाहिकप्रत्यक्षव्यक्तीनां समानाकारग्रहोत्तरवर्त्तित्वे-ति न तासां प्रमात्वहानिः हानिस्तु समानाकारानुभव-प्रत्यक्षाणां स्मृतीनामिति जरन्मीमांसकानां समाधानं वक्ष्यति ।

नाप्तोक्तता तु वाक्यार्थगर्भा शाब्दोपयुज्यते ।
वाक्यार्थानामपूर्वत्वात्संशयेऽप्यन्वयोदयात् ॥

प्रत्येकपदार्थवदपरपदार्थपर्य्यवसन्नस्य वाक्यार्थस्य ज्ञानव-दुक्तत्वरूपाया आप्तोक्तताया निश्चयः शाब्दमतेः कारणं स्यात् पि तेनैव रूपेण साध्यनिश्चयेन प्रतिबन्धादेकपदार्थपक्षि- अपरपदार्थानुमितेरनुत्पादो न चैवं शाब्दधियः पूर्वं र्थस्योपस्थित्यनियमेन तद्गर्भस्याप्तोक्तत्वस्यापि मतेरना-त्वात् अन्यथा वेदस्याप्यनुवादकतापत्तेः न हि लौकि-त्वेन ज्ञातवाक्येन जनित एवान्वयबोधे तस्य हेतुत्वं त् एकपदार्थेऽपरपदार्थस्य शब्दे वाक्यार्थज्ञानवदुक्तत्वस्य पि अनुमितेरुत्पादाच्च । अतएवाप्तोक्तत्वस्य संशये कनिश्चये वान्वयबुद्धेरनुत्पादादवश्यं तन्निश्चयस्तत्र हेतु-

रित्यपि प्रत्युक्तम् असिद्धेः। ननु माभूदाप्तोक्तत्वस्य निश्चयानु-
रोधेन सिद्धसाधनं तात्पर्य्यस्य तु स्यात् तन्निश्चयस्यान्वयधी-
हेतुत्वात् अन्यथा घटकर्मत्वादिपरत्वाभावस्य घटकर्मत्वाद्यन्य-
मात्रपरत्वस्य वा निश्चयेऽपि घटमित्यादिवाक्यात् कर्मत्व
घटीयमित्याद्यन्वयबोधापत्तेरिति चेन्न कर्मताधर्मिकघटाद्य-
न्वयधीपरत्वाभावनिश्चयदशायां प्रमेयत्वादिप्रकारेण घटकर्म-
त्वादिपरत्वस्य निश्चयेऽपि घटीयं कर्मत्वमित्यन्वयमतेरनुत्पत्त्या
कर्मताधर्मिकघटान्वयबोधपरत्वप्रकारकनिश्चयत्वेनैव तात्पर्य्यधि-
यस्तस्यां कारणत्वेन वाक्यार्थस्य तत्रानिवेशात्। वस्तुतः
समानानुपूर्वीकस्यैव वाक्यान्तरस्य तस्यैव वा कालान्तरमन्तर्भाव्य
घटीयकर्मत्वादिपरत्वनिश्चयसत्त्वेऽपि श्रूयमाणवाक्यव्यक्ता-
वदानीमन्तर्भावेण तत्परत्वस्यानिश्चयेऽभावनिश्चये वा घटीयं
कर्मत्वमित्याद्यन्वयमतेरनुत्पादाद्विशिष्यैव तत्तद्वाक्यव्यक्तिधर्मि-
कस्य घटकर्मत्वादिपरत्वनिश्चयस्य तत्तदन्वयबोधहेतुत्वम्।
तथाच तत्तद्धेतुभूतानां प्रकरणज्ञानाभिधानामेव विशे
व्यक्तीनां तथात्वमुचितम् अवश्यं कॢप्तपूर्ववर्त्तिताकत्व
अतएव सैन्धवमानय इत्यादावपि लवणपरत्वधीर्न लव
द्यन्वयबुद्धौ हेतुः किन्तु तदर्जकत्वेनाभिमतं भोजनान्ति
स्य प्रतिसन्धानमिति न्यायसिद्धान्तः। एवञ्च वा
प्रतीतिजनकतयाभिप्रेतत्वलक्षणस्य तात्पर्य्यस्य ज्ञानान
शाब्दसामान्ये हेतुत्वस्य संशये व्यतिरेकनिश्चये च तदनुत्प
तन्निश्चयस्यैव युगपदनेकार्थोपस्थितावेकार्थमात्रान्वये विनिग
कत्वात् लक्षणाकल्पकत्वात् मुख्यार्थबाधस्य सर्वत्र लक्षणा
असम्भवात् तथा च तात्पर्य्यावच्छेदकतयैव सर्वत्र वाक्या
सिद्धेः प्रत्यक्षानुमितिभ्यां भिन्नमनुभवं भावयन्नपि शा
गृहीतग्राहित्वेनानुवादक इति प्रभाकरमतमप्यनादेयं क

वाक्यानामन्यार्थमात्रपरत्वस्य शुकवाक्यानाञ्च स्वार्थपरत्वाभावस्य निश्चयेऽपि ततः सामाजिकादेरन्वयानुभावोत्पत्त्या व्यभिचारादित्यास्तां विस्तरः ।

ननु स्वार्थान्वयगोचरो बोधः साकाङ्क्षैरपि सार्थकैरेव शब्दैः सम्पादनीयो न तु निरर्थकैस्तत्र कोऽसौ सार्थकः कतिविधश्च इत्याकाङ्क्षायामाह ।

शब्दान्तरमपेक्ष्यैव सार्थकः स्वार्थबोधकृत् ।
प्रकृतिः प्रत्ययश्चैव निपातश्चेति स त्रिधा ॥

यादृशः शब्दः शब्दान्तरं सहकृत्यैव स्वस्य स्वघटकस्य वा वस्तुगत्याप्ययादृशार्थविशिष्टबोधं प्रत्यनुकूलः स तथाविधार्थे सार्थकः पटघटाद्याः प्रकृतयः सुप्तिङाद्याः प्रत्ययाः चादयो निपाताश्च स्वोपस्थाप्यार्थस्य बोधं नियमतः शब्दान्तरं सहकृत्य जनयन्ति वाक्यानि पुनरसहकृत्यापि । शशविषाणादिकः शब्दोऽपि शशीयत्वादिना विषाणादेरन्वयबोधमादधानस्तादृशविषयताकबोधने सार्थक एव परत्वयोग्यः । सचायं त्रिविध एव प्रकृतिः प्रत्ययो निपातश्चेति शप्श्यनादिविकरणो नुमागमश्चान्वयबोधमें प्रकृत्यादीनां सहायोऽपि न स्वार्थोपस्थिति-[illegible]ा येन तमादाय चतुरादिविधः सार्थकः स्यात् । युत्तो [illegible] इत्यादावपि युष्मदादिसम्बन्धो न वसाद्यादेशस्यार्थः किन्तु [illegible]दादेशिनो युष्माकमित्यादिवाक्यस्य अतः पूर्वपदमपेक्ष्यैव [illegible]ादृशसम्बन्धबोधानुकूले तत्र न प्रसङ्गः । सदृशाद्यर्थेषु प्रकृत्यादिभ्यो भिन्नेषु निभनीकाशादिशब्देषु अतिप्रसङ्गस्तु समासान्तर्गतत्वनियतस्वार्थबोधकताकान्यत्वेन विशेषणाद्वारणीयः ।

तत्र प्रथमोद्दिष्टां प्रकृतिं लक्षयति ।

स्वेतरार्थानवच्छिन्नयत्स्वार्थस्यावबोधने ।
यच्छब्दनिष्ठयो हेतुः प्रकृतिः सा तदर्थिका ॥

स्वेतरशब्दार्थविशेषितस्य यादृशस्वार्थस्यान्वयबोधं प्रति
स्वाव्यवहितोत्तरत्वसंसर्गेण यादृशशब्दवत्ताया निश्चय एव
हेतुस्तादृशस्तथाविधार्थे प्रकृतिः । पटभूप्रभृतयोऽपि शब्दाः
स्वोत्तरविभक्त्याद्यंशे निश्चिता एव स्वोपस्थाप्यस्य वसनजन-
नादेरन्वयं प्रत्ययार्थे कर्मत्वकर्तृत्वादौ बोधयन्ति न त्वन्य-
प्रत्ययास्तु पदान्तरार्थानवच्छिन्नस्य सङ्ख्याकालेष्टसाधनत्वादि-
स्वार्थस्यान्वयबोधं प्रत्यनिश्चिता अप्युपयुज्यन्ते । चैत्रः पचति
यजेतेत्यादौ शब्दान्तरधर्मिकतदादिनिश्चयस्यासत्त्वेऽपि तद-
र्थस्यैकत्ववर्त्तमानत्वादेः चैत्रपाकादावन्वयात् स्वाव्यव-
हितोत्तरत्वसंसर्गेण तादृशशब्दवत्ताया निश्चय एव तदुपस्था-
यादृशार्थान्वयबोधं प्रति हेतुस्तादृशस्यैव शब्दस्य प्रकृ-
तथाविधः स्वार्थः स च पाकेत्यादेः शत्रादिविरहे
पचनादिरूपः सुबन्त एव पचनादेः कर्मत्वादावन्वयबोधं ।
यादिधर्मिकतादृशशब्दवत्ताया निश्चयस्यैव हेतुत्वात् ।
गुडो द्राक्षेत्यादावेकदसमासत्वादिरूपस्य स्वार्थस्य द्रा-
दावन्वयबोधं प्रति गुडादिपदधर्मिकः स्वोत्तरत्वसम्बन्धे-
बहुत्वादिप्रत्ययस्य निश्चय एव हेतुरपि तु न पदान्तरार्था-
वच्छिन्नस्य तादृशस्वार्थस्य द्राक्षादावन्वयबोधकः प्रत्यया-
प्रकृत्यर्थावच्छिन्नस्यैव संख्यादिभिन्नस्वार्थस्य धर्म्यन्तरेऽन्व-
बोधकत्वव्युत्पत्तेः । अतो नाम्नः प्राग्विहिते बहुचि
प्रसङ्गः न वा चन्द्रनिभोऽयं कुम्भकारोऽयमित्यादौ सदृशकर्तृ-
द्यर्थके निभकारादौ पूर्वपदार्थावच्छिन्नस्यैव सदृशाद्यर्थस्य
बोधकतायास्तत्र व्युत्पन्नत्वात् । न चैवमिवकारादेरन्वयो-
गाद्यर्थे प्रकृतित्वं न स्यात् पार्थ एव धनुर्धर इत्यादौ पार्थादि-
पदार्थविशेषितस्यैव तादृशस्वार्थस्यान्वयबोधं प्रति हेतुत्वादिति
वाच्यम् इष्टत्वात् प्रकृतेः स्वोत्तरविभक्तिसाकाङ्क्षसजातीयत्व

नियमात् एवकारादेश्च सविभक्तिकत्व एव प्रमाणाभावात्। ये तु मन्यन्ते पार्थान्ययोगत्वावच्छिन्नव्यवच्छेदस्यैव तन्नैवकारार्थत्वं तादृशार्थबोधने तात्पर्य्यग्राहकत्वेन शवादिवदाकाङ्क्षासम्पादकत्वेनैव वा पार्थादिशब्दस्योपयोगादेवकारादिनिपातः प्रकृतिरिव तस्य च लुप्तविभक्तिकत्वेन तादृशविभक्त्यंश एव तन्निश्चयस्य पार्थान्ययोगत्वाद्यवच्छिन्नव्यवच्छेदरूपस्यार्थान्वयबोधं प्रति हेतुत्वमिति तेषां पार्थएवेत्यत्र पार्थैवकारार्थयोर्भेदेनानुभविकस्यान्वयबोधस्यापलापप्रसङ्गः प्रसङ्गश्च तयोरभेदेनान्वयस्य तथा व्यवच्छेद एवेत्यादावपि प्रातिपदिकार्थयोरभेदान्वये तन्त्रस्य नाम्नोः समानविभक्तिकत्वस्यानपायादिति। यत्तु उपसर्गाणामिवैवकारादिनिपातानामपि न प्रकृतित्वं निरर्थकत्वात् परन्तु समभिव्याहृतपार्थादिपदानां तदन्ययोगव्यवच्छिन्नादिलक्षणायां निरूढत्वसम्पादकत्वमात्रमिति मतं तच्चिन्त्यम्।

लाघवादन्यथा निर्वक्ति।

स्वोपस्थाप्ययदर्थस्य बोधने तस्य निश्चयः।
तत्त्वेन हेतुरथवा प्रकृतिः सा तदर्थिका॥

तत्त्वेन यन्निश्चयत्वेन स्वोपस्थाप्ययादृशार्थस्यान्वयबोधं प्रति स्वाव्यवहितोत्तरत्वसंसर्गेण यादृशशब्दवत्तानिश्चयत्वेन हेतुत्वं तादृश एव शब्दस्तथाविधार्थे प्रकृतिरिति तु फलितार्थः। बहुगुडो द्राक्षेत्यादौ बहुत्वाद्यर्थस्यान्वयबोधं प्रति न गुडादिपदधर्मिकबहुत्वादिनिश्चयत्वेन हेतुत्वमपितु सुबादिधर्मिकबहुगुडादिपदनिश्चयत्वेन अन्यथा केवलादपि बहुगुडादिशब्दात् द्राक्षादौ बहुत्वाद्यर्थस्यान्वयबोधापत्तेरिति न तत्र प्रसङ्गः।

प्रत्ययं लक्षयति विभजते च ।

याद्दशार्थे प्रकृत्यन्यो निपातान्यश्च वृत्तिमान् ।
स तादृशार्थे शब्दः स्यात् प्रत्ययोऽसौ चतुर्विधः ॥

यादृशार्थ इति वृत्तावप्यन्वेति तेन यादृशार्थकप्रकृति
निपाताभ्यां भिन्नो यादृशार्थे शक्तिनिरूढलक्षणान्यतरा
प्रशस्तवृत्तिमान् यादृशः शब्दः स तादृशार्थकप्रत्ययः प्र
सायां मतुपो विधानात् शक्त्या निरूढलक्षणया च गु
गुणिनोः स्थितिप्रस्थानयोश्च बोधका अपि शुक्लस्थाप्रभृत
प्रकृतिभ्यो न भिन्नाः तथा शक्त्या समुच्चयादिप्रतिपादक
अपि चादयो न निपातेभ्यः सुबादयस्तु स्वपरतायामेव प्र
तयो नत्वेकत्वाद्यर्थे । तृतीयादौ कर्मत्वादेः सत्यपि लक्षणा
न निरूढा प्रायशः प्रयोगविरहात् । अतएव यत्रापि
प्रयोगस्तत्र तृतीयादितोऽपि कर्मत्वादेरवगमः यथा पशुना
रुद्रं यजेत इत्यादौ । अतएव चान्वयबलादेवैकवचनादे
रेकत्वादिबोधकत्वप्राप्तौ द्व्येकयोर्द्विवचनैकवचने बहुषु ब
वचनमिति यत् पाणिनिः प्राह तदिदं द्वित्वैकत्वादावे
द्विवचनैकवचनादिनियमार्थमिति फणिभाष्यकृतः
द्वित्वादावपि नैकवचनादिः प्रमाणम् । तद्धिताख्यातकृतो
प्येतेन व्याख्याताः तत्रापि शक्तिवन्निरूढलक्षणाया एवेन
प्रत्ययत्वसम्पादकत्वात् नहि भक्षको दाक्षिः पक्वतीत्या
भक्षणादेर्लक्षणया देशाद्यवगमः कृतादितः कस्यापि स्वार्थ
कप्रत्ययमात्रस्य च स्वरूपमर्थस्तेन जुगुप्सते देवतेत्यादौ स
तलादौ नाव्याप्तिः भावविहितानामपि घञादीनामुक्ते
गतिः तत्रापि भावपदस्य धात्वर्थस्वरूपपरत्वात् । अन्या
पाकं पश्येत्यादौ धात्वर्थस्य पचनादेः कर्मत्वादावन्वय
पत्तेः सुबर्थे धात्वर्थस्यान्वयस्याव्युत्पन्नत्वात् इत्थमेव भिन्नस्ता

स्तोकः पाक इत्यादिप्रयोगस्य परिशिष्टाद्युक्तस्य प्रामाण्यम्
अन्यथा स्तोकादीनां धात्वर्थे विशेषणत्वे नियमतो द्वितीया-
पत्तेः अतएव सञ्चारो रतिमन्दिरावधि सखीकर्णावधि
श्व्याहृतमित्यादिकं काव्यम् आगमोनिष्फलस्तत्र भुक्तिः
स्तोकापि यत्र नो इत्यादिस्मृतिश्च सङ्गच्छत इति नव्याः।
स्वोत्तरप्रत्ययार्थसाकाङ्क्षस्यैव धातो रर्थे विशेषणतापन्नस्य बोधने
तदर्थकनाम्नो द्वितीयाद्यपेक्षा न तु धातुमात्रस्य तथाच
स्तोकः पाक इत्यादिरेव प्रमाणं न तु स्तोकं पाक इत्यादिः
अपृथग्रूपक्रियाया विशेषणं कर्मेत्याद्यनुशिष्टेरपि तत्रैव
तात्पर्य्यात्। अतएव स्तोकं स्तोयते साधु गतं चकितं
द्रष्टव्यमित्यादौ धात्वर्थस्य तिङाद्यर्थकालादिसाकाङ्क्षत्वान्न
तद्विशेषणस्य द्वितीयाद्यनुपपत्तिरिति तु शाब्दिकसम्प्रदायः।
यत्तु वाक्यपदीये भर्तृहरिणोक्तं यः स्वेतरस्य यस्यार्थे
स्वार्थस्यान्वयबोधने। यदपेक्षस्तयोः पूर्वा प्रकृतिः प्रत्ययः
परः॥ इति तन्नञ्जादावव्याप्तिप्रसङ्गादुपेक्षितम्। यदपि
स्वेतरार्थानवच्छिन्नस्वार्थस्यान्वयबोधने। योऽसमर्थः सैष
शब्दः प्रत्ययोऽयं चतुर्विधः॥ इत्युमापत्युक्तं तदप्ययुक्तं सुप्-
तिङोः पदार्थान्तरावच्छिन्नस्वार्थसंख्यादिप्रकारकबोधसमर्थ-
त्वेन तयोस्तव्यादौ चाव्याप्तेः सैष इत्यत्र सस्य पादपूरणे
पुनः सन्धिः।

लाघवादन्यथा निर्वक्ति।

इतरार्थानवच्छिन्ने स्वार्थे यो बोधनाक्षमः।
तिङर्थस्य निभाद्यन्यः स वा प्रत्यय उच्यते॥

यः शब्दः शब्दान्तरार्थाविशेषिते यादृशस्वार्थे धर्मिणि
तिङर्थस्यान्वयबोधने स्वरूपायोग्यः स वा निभादिशब्देभ्यो
भिन्नस्तादृशार्थे प्रत्यय इत्यर्थः। चैत्रोऽस्तीत्यादावर्थान्तरा-

प्रत्ययं लक्षयति विभजते च ।

याद्दशार्थे प्रकृत्यन्थो निपातान्यश्च वृत्तिमान् ।
स ताद्दशार्थे शब्दः स्यात् प्रत्ययोऽसौ चतुर्विधः ॥

याद्दशार्थं इति वृत्तावप्यन्वेति तेन याद्दशार्थकप्रकृति
निपाताभ्यां भिन्नो याद्दशार्थे शक्तिनिरूढ़लक्षणान्यतरास
प्रशस्तवृत्तिमान् याद्दशः शब्दः स ताद्दशार्थकप्रत्ययः प्र
सायां मतुपो विधानात् शक्त्या निरूढ़लक्षणया च गु
गुणिनोः स्थितिप्रस्थानयोश्च बोधका अपि शुक्लस्थाप्रभृत
प्रकृतिभ्यो न भिन्नाः तथा शक्त्या समुच्चयादिप्रतिपाद
अपि चादयो न निपातेभ्यः सुवादयस्तु स्वपरतायामेव प्र
तयो नत्वेकत्वाद्यर्थे । तृतीयादौ कर्मत्वादेः सत्यपि लक्ष
म निरूढ़ा प्रायशः प्रयोगविरहात् । अतएव यत्रा
प्रयोगस्तत्र तृतीयादितोऽपि कर्मत्वादेरवगमः यथा
रुद्रं यजेत इत्यादौ । अतएव चान्वर्थबलादेवैकवचना
रेकत्वादिबोधकत्वप्राप्तौ द्व्येकयोर्द्विवचनैकवचने बहुषु
वचनमिति यत् पाणिनिः प्राह तदिदं द्वित्वैकत्वादा
द्विवचनैकवचनादिनियमार्थमिति फणिभाष्यकृतः
द्वित्वादावपि नैकवचनादिः प्रमाणम् । तद्धिताख्यातकृतो
प्येतेन व्याख्याताः तत्रापि शक्तिवन्निरूढ़लक्षणाया
प्रत्ययत्वसम्पादकत्वात् नहि भक्षको दाक्षिः पक्षतौ
भक्षणादेर्लक्षणया देशाद्यवगमः कृतादितः कस्यापि स्वा
कप्रत्ययमात्रस्य च स्वरूपमर्थस्तेन जुगुप्सते देवतेत्यादौ
तलादौ नाव्याप्तिः भावविहितानामपि घञादीनामु
गतिः तत्रापि भावपदस्य धात्वर्थस्वरूपपरत्वात् । अन्य
पाकं पश्येत्यादौ धात्वर्थस्य पचनादेः कर्मत्वादावन्व
पत्तेः सुवर्थे धात्वर्थस्यान्वयस्याव्युत्पन्नत्वात् इत्थमेव

स्तोकः पाक इत्यादिप्रयोगस्य परिशिष्टाद्युक्तस्य प्रामाण्यम्
अन्यथा स्तोकादीनां धात्वर्थे विशेषणत्वे नियमतो द्वितीया-
पत्तेः अतएव सञ्चारो रतिमन्दिरावधि सखीकर्णावधि
व्याहृतमित्यादिकं काव्यम् आगमोनिष्फलस्तत्र भुक्तिः
स्तोकापि यत्र नो इत्यादिस्मृतिश्च सङ्गच्छत इति नव्याः ।
प्रश्नोत्तरप्रत्ययार्थसाकाङ्क्षस्यैव धातोरर्थे विशेषणतापन्नस्य बोधने
च शब्दर्थकनाम्नो द्वितीयाद्यपेक्षा न तु धातुमात्रस्य तथाच
स्तोकः पाक इत्यादिरेव प्रमाणं न तु स्तोकं पाक इत्यादिः
पृथग्रूपक्रियाया विशेषणं कर्मेत्याद्यनुशिष्टेरपि तत्रैव
तात्पर्य्यात् । अतएव स्तोकं स्तोयते साधु गतं चकितं
द्रष्टव्यमित्यादौ धात्वर्थस्य तिङाद्यर्थकालादिसाकाङ्क्षत्वान्न
तद्विशेषणस्य द्वितीयाद्यनुपपत्तिरिति तु शाब्दिकसम्प्रदायः ।
यत्तु वाक्यपदीये भर्तृहरिणोक्तं यः स्वेतरस्य यस्यार्थे
स्वार्थस्यान्वयबोधने । यदपेक्षस्तयोः पूर्वा प्रकृतिः प्रत्ययः
परः ॥ इति तद्भुजादावव्याप्तिप्रसङ्गादुपेक्षितम् । यदपि
इतरार्थानवच्छिन्नस्वार्थस्यान्वयबोधने । योऽसमर्थः सैष
शब्दः प्रत्ययोऽयं चतुर्विधः ॥ इत्युमापत्युक्तं तदप्ययुक्तं सुप्-
तिङोः पदार्थान्तरावच्छिन्नस्वार्थसंख्यादिप्रकारकबोधसमर्थ-
तया तेन तयोस्तव्यादौ चाव्याप्तेः सैष इत्यत्र सस्य पादपूरणे
तीत्यानः सन्धिः ।

लाघवादन्यथा निर्वक्ति ।

इतरार्थानवच्छिन्ने स्वार्थे यो बोधनाक्षमः ।
तिङर्थस्य निभाद्यन्यः स वा प्रत्यय उच्यते ॥

यः शब्दः शब्दान्तरार्थाविशेषिते यादृशस्वार्थे धर्मिणि
ङर्थस्यान्वयबोधने स्वरूपायोग्यः स वा निभादिशब्देभ्यो
न्नस्तादृशार्थे प्रत्यय इत्यर्थः । चैत्रोऽस्तीत्यादावर्थान्तरा-

नवच्छिन्ने स्वार्थे नाम्नां तिङर्थान्वयबोधकत्वम्। एवं यजे
त्वोयेतित्यादौ यजादिधातूनाम् पचतीत्यादौ तिङां पा
कोऽस्तीत्यादौ क्तानां काश्यपिरित्यादौ च तद्धितान
प्रकृत्यर्थावच्छिन्न एव स्वार्थे क्त्वादौ तिङर्थस्य वर्त्तमा
त्वादेर्बोधकत्वं न तु तदवच्छिन्न इति न तेषु अप्रसङ्ग
निभनिपातादिकस्तु शब्दान्तरार्थानवच्छिन्ने सदृशसमुच्चया
स्वार्थे तिङर्थस्यान्वयं प्रति स्वरूपायोग्योऽपि निभादिरेवेति
तत्र प्रसङ्गः।

निपातं लक्षयति।

स्वार्थे शब्दान्तरार्थस्य तादात्म्येनान्वयाक्षमः।

सुबाद्यन्यो निपातोऽसौ विविधश्चादिसंज्ञितः॥

यः शब्दः केवले यादृशस्वार्थे शब्दान्तरार्थस्य तादात्म्
नान्वयबोधं प्रत्यसमर्थः सुबादिप्रत्ययेभ्यः प्रत्येकं भिन्नः
तादृशार्थे निपातः चादयो निपाताः स्वार्थे समुच्चयादौ नाम
द्यर्थस्याभेदेनान्वयबोधं प्रत्ययोग्याः नहि स्मृतमनुभूतश्चेत्यादि
कस्यापि स्मृतः समुच्चय इत्यादि रनुभवः किन्तु स्मृतानुभूतं
समुच्चय इत्यादिरेव। स्तोकं पचतीत्यादौ धातुरपि स्व
नामार्थस्य तादात्म्यं बोधयंस्तत्समर्थ एव प्रत्ययस्तु सुबा
रेव च शब्द इत्यादौ नामार्थस्याभेदसाकाङ्क्षएवकारा
स्वपरतायान्न निपातः किन्तु नामैव पुरन्दरप्रभृतौ तु ना
निपातव्यपदेशः सूत्रानिष्पाद्यत्वप्रयुक्तो भाक्तः कार्त्तिक्या
यन्न दानं तदत्यन्तविनिन्दितमित्यादौ न केवले नञर्थे यदर्थ
तादात्म्येनान्वयः किन्तु दानाद्यवच्छिन्ने। स्वर्दिवा नक्तमा
व्ययमपि नामैव न तु निपातः शोभनं स्वरित्यादौ तदर्थे ना
र्थस्य तादात्म्येनान्वयात्। प्रादयस्तूपसर्गा न सार्थकाः सार्थ
श्चेत् निपाता अपि जातौ सत्ता नास्तीत्यत्र सत्तायां जाति

स्वस्य समवेतत्वनिरूपितस्वरूपसम्बन्धनात्यन्ताभावो नञा प्रत्याय्यते न तु सत्त्वस्याभावः प्रथमान्तपदानुपस्थाप्यत्वेन नञर्थे तत्रास्तित्वादिक्रियान्वयस्यायोगात् जातौ जातो न स्त इत्यत्र जातिद्वयत्वावच्छिन्नाभावस्यैकत्वेन तत्र तिङर्थद्वित्वस्य पर्य्याप्तिवा[illegible]ान्वयासम्भवाच्च। सत्ता समवायेन जातौ नास्तीत्यादौ तु समवेतत्वीयस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकत्वे समवायशब्दस्य लक्षणा परेषामपि सत्ताभावस्य समवायावच्छिन्नत्वासम्भवेन समवायावच्छिन्नप्रतियोगिताकत्वे तल्लक्षणाया आवश्यकत्वात् प्रथमार्थप्रतियोगित्वे समवायावच्छिन्नत्वस्य तत्रान्वय इति तु साहसं प्रथमायाः प्रतियोगितार्थकत्वस्य क्वचिदप्यकल्पनात् विशिष्टसत्ता गुणे नास्तीत्यादिकस्तु प्रयोगो यदि प्रमाणं तदाधेयत्वस्याव्याप्यवृत्तित्वेन द्रव्यवृत्तित्वावच्छेदेन तस्यां गुणवृत्तित्वाभावसत्त्वात् विशिष्टस्यातिरिक्तत्वादित्यपि कश्चित्। न क्रोधो न च मात्सर्य्यं न लोभो नाशुभा मतिः। भवन्ति कृतपुण्यानां भक्तानां पुरुषोत्तम इत्यादावनेकनञामानर्थक्यप्रसङ्गस्तु न तं विरिञ्चिर्न भवो न श्रीर्नापि धनाधिपः। दातुमर्हन्ति विभवं विष्णोराराधनेन य इत्यादाविव प्रकारान्तरवादिनामपि समानः समानसमाधानश्च। पदात् परस्य युष्मदादेस्ते प्रभृत्यादेशविधौ च पदशब्दः साकाङ्क्षनिपातस्याप्युपलक्षकस्तेन न ते धनं धर्म्यमित्यादौ न तस्यानुपपत्तिः सदृशाद्यर्थे निभादेर्निपातत्वव्युदासस्तु प्रागुक्तदिशावसेयः। स चायं निपातश्च तु नञ पुनरिवैवमास्मादिभेदाद्बहुविधः।

ननु यदि प्रकृतिः प्रत्ययो तिपातो वा स्वार्थोपस्थितिद्वारान्वयबोधं कुर्य्यात् प्रत्येकमात्रं निराकाङ्क्षशब्दसहकृतं वा किन्न कुर्य्यात् मिलितानामेव तेषां तथात्वन्तु सर्वत्रासम्भव इत्यत आह।

वाक्यभावमवाप्तस्य सार्थकस्यावबोधतः ।
सम्पद्यते शाब्दबोधोन तन्मात्रस्य बोधतः ॥

सार्थकस्य प्रकृत्यादेर्वाक्यतामापन्नस्यैव स्वार्थोपस्थितिद्वारा न्वयबोधकत्वं न तु प्रत्येकस्य निराकाङ्क्षसहितस्य वा ।

वाक्यं यदि शब्दसमूहस्तदा मिथोनिराकाङ्क्षस्यापि तस्या न्वयबोधकत्वापत्तिरतो वाक्यं लक्षयति ।

मिथः साकाङ्क्षशब्दस्य व्यूहोवाक्यं चतुर्विधम् ।
सुप्तिङन्तचयो नैवमतिव्याप्त्यादिदोषतः ॥

यादृशशब्दानां यादृशार्थविषयिताकबोधं प्रत्यनुकू परस्पराकाङ्क्षा तादृशशब्दस्तोम एव तथाविधार्थे वाक्यम् तच्च चतुर्विधं चतस्रश्च विधा वक्ष्यन्ते । वह्निना सिञ्चति इत्या द्यपि वाक्यमेव परन्तु बाधितार्थकत्वादयोग्यम् । शाब्दसं दाहार्थ्यलोपगमे निर्वह्निर्वह्निमान् पचन्न पचतीत्यादिकम वाक्यमेव नो चेदपार्थकमेव यादृशबोधत्वावच्छेदेनाकांक्ष तादृशबुद्ध्यर्थं प्रयुक्तपदानामेव तथाविधार्थबोधं प्रत्यपादक त्वात् यत्तु सुप्तिङन्तचयवाक्यमित्यमरसिंहेनोक्तं तन्न सुः सुबन्तादेः प्रत्येकसमुदायविकल्पेनातिव्याप्त्यतिव्याप्त्योः प्रस ङ्गात् न हि घटं पटमित्याकारः पचति गच्छतीत्यानुपूर्वीको शब्दसमूहो वाक्यं न वा घटं पचतीत्येतयोः प्रत्येकं न वा क्रियारहितस्त्र वाक्यमस्तीत्यादिकस्तु प्राचां प्रवादो निर्यु कत्वादश्रद्धेयः ।

प्रकृतिं विभजते ।

निरुक्ता प्रकृतिर्द्वेधा नामधातुप्रभेदतः ।
यत् प्रातिपदिकं प्रोक्तं तन्नाम्नो नातिरिच्यते ॥

निरुक्ता न तु सांख्यानामिव जगदुपानभूता यच्च पाणि प्रभृतिभिः प्रातिपदिकं प्रकृतिरित्युक्तं तदपि नाम्नो नाति च्यते नातो विभागन्यूनता ।

तत्र प्रथमोद्दिष्टं नाम लक्षयति ।

येन स्वीययदर्थस्य मुख्यतः प्रतिपादने ।
स्वोत्तरप्रथमापेक्षा तन्नाम स्यात्तदर्थकम् ॥

यादृशशब्देन स्वोपस्थाप्ययदर्थमुख्यविशेष्यकान्वयबोधार्थं स्वोत्तरप्रथमाविभक्तिरपेक्ष्यते तादृशः शब्दः एव तदर्थकं नाम । घटादयो हि शब्दाः प्रथमान्तत्वेन निश्चिता एव स्वार्थमुख्यविशेष्यकं बोधमुत्पादयन्ति नत्वन्यथा न हि घट इत्यादित इव घटादित्यादितोऽपि घटादिमुख्यविशेष्यकः सुवर्थसंख्याद्येरवगमः । पीतपटेत्यादिकः समासोऽपि स्वोत्तरं प्रथमाप्रतिसन्धानदशायामेव पटादिमुख्यधर्मिताकस्य पीताद्यन्वयबोधस्य जनकः अतएव नापदं प्रयुञ्जीतेति वृद्धाः । पदं विभक्त्यन्तं पीतपटरूपमित्यादावपि नावान्तरवाक्यार्थबोधपूर्वको महावाक्यार्थबोधः पटादिनाम्नः प्रथमान्तत्वाभावेन तदर्थे पीताद्यन्वयधियः पूर्वमसम्भवात् विशिष्टवैशिष्ट्यावगाहितायाः प्रमाणान्तरेण पटधर्मिकपीतनिश्चयादपि तत्र सम्भवात् । न चान्योन्यपरस्परादिनामव्याप्तिरेभ्यः प्रथमा नाभिधीयते इति वृद्धस्मरणादिति वाच्यं मल्लाभ्यामन्योन्यं हन्यत इत्यादौ मल्लयोः परस्परकर्तृकहननकर्मत्वान्वयानुरोधेन तेषामपि प्रथमान्तत्वादन्यथा सकर्मकस्य हन्तेर्भावाख्यातसाकाङ्क्षत्वानुपपत्तेरकर्मकस्यैव धातोस्तथात्वात् ।

निरुक्तं नाम विभजते ।

रूढञ्च लक्षकञ्चैव योगरूढञ्च यौगिकम् ।
तच्चतुर्धा परै रूढयौगिकं मन्यतेऽधिकम् ॥

तन्नाम च त्रयमवधारणार्थं तेन किञ्चिन्नाम क्वचिदर्थे रूढमेव यथा गोप्रभृतौ गवादि गमेर्डोः डाभाभ्यां नुर्वेटवृत्यादेरौणादिकप्रत्ययस्य शक्तिविरहेण यौगिकत्वविरहात्

किञ्चिल्लक्षकमेव यथा तीरादौ गङ्गादि आद्यव्युत्पत्त्या पूर्ववर्त्ती
शक्तिग्रहस्याविशिष्टत्वेऽप्याजानिकप्रयोगापत्त्या तदप्रामाण्य-
कल्पनात् शक्तेः पूर्वपूर्वप्रयोगानियतत्वात् किञ्चिद्योगरूढ़मेव
यथा पङ्कजातपद्मादौ पङ्कजादि किञ्चित् यौगिकमेव यथा
पाककर्त्रादौ पाचकादि। रूढ़यौगिकमप्यधिकं नाम यथा
मण्डप महारजतादि तद्धि कदाचिदवयवशक्त्या योगार्थमेव
कदाचिच्च समुदायशक्त्या रूढ्यर्थमेवाभिधत्ते इत्यपरेषाम्
मतम्। गौर्वाहीकइत्यादौ तु शक्यार्थसदृशत्वावच्छिन्न
बोधकतया गौणं गवादिपदं गोसदृशादौ लक्षकमेव न
ततो भिद्यते।

रूढं नाम लक्षयति विभजते च।

रूढं सङ्केतवन्नाम सैव संज्ञेति कीर्त्यते।
नैमित्तिकी पारिभाषिक्यौपाधिक्यपि तद्विदा॥

यन्नाम यादृशार्थे सङ्केतितमेव न तु यौगिकमपि तद्रूढ़
योगरूढ़न्तु पङ्कजादिकं न तथा रूढ़नामैव च संज्ञापदे
नाभिलप्यते न तु रूढ़ादिवत् संज्ञापि नाम्नोऽवान्तरभेदः
विभागव्याघातः स्यात्। संज्ञायाश्च त्रयो भेदाः नैमित्ति
पारिभाषिकी औपाधिकी चेति पाचकपाठकादयस्तु न संज्ञा
सङ्केतशून्यत्वादिति वक्ष्यते।

ये तु रूढस्य नाम्नश्चतुर्विधत्वमाहुस्तन्मतमुपन्यस्यति

जातिद्रव्यगुणस्पन्दैर्धर्मैः सङ्केतवत्तया।
जातिशब्दादिभेदेन चातुर्विध्यं परे जगुः॥

गोगवयादीनां गोत्वादिजात्या पद्माद्यादीनां ला
लवनादिद्रव्येण धन्यपिशुनादीनां पुण्यद्वेषादिगुणेन च
चपलादीनाञ्च शब्दानां कर्मणावच्छिन्नशक्तिमत्त्वाच्चातुर्विध्य
रूढ़ानामिति। यदुक्तं दण्डाचार्य्यैः शब्दैरेव प्रतीयन्ते जा

द्रव्यगुणक्रियाः। चातुर्विध्यादमीषान्तु शब्द उक्तश्चतुर्विध इति तदेतज्जडमूकमूर्खादीनामन्यशून्यादीनाञ्च शब्दानामपरिग्रहापत्त्या परित्यक्तमस्माभिः।

नैमित्तिकसंज्ञां लक्षयति।

> जात्यवच्छिन्नसङ्केतवती नैमित्तिकी मता।
> जातिमात्रे हि सङ्केताद्व्यक्तेर्भानं सुदुष्करम्॥

यन्नाम जात्यवच्छिन्नसङ्केतवत् सा नैमित्तिकी संज्ञा यथा गो चैत्रादिः सा हि गोत्वचैत्रत्वादिजात्यवच्छिन्नमेव गवादिकमभिधत्ते न तु गोत्वादिजातिमात्रं गोपदं गोत्वे सङ्केतितमित्याकारकग्रहाद्गामानयेत्यादौ गोत्वादिना गवादेरन्वयानुपपत्तेः एकशक्तत्वग्रहस्यान्यानुभावकत्वेऽतिप्रसङ्गात्। ननु गामानयेत्यादौ गोत्वादिकर्मताकत्वेनैवानयनादेरन्वयधीर्गोत्वादिशक्तत्वेन पदज्ञानस्य गोत्वाद्यन्वयबुद्धिं प्रत्येव हेतुत्वात् सुवथकर्मत्वादौ स्वाश्रयवृत्तित्वसम्बन्धेनैव प्रकृत्यर्थस्य गोत्वादेः साकाङ्क्षत्वात् गवादिकर्मताकत्वेन बोधस्तूत्तरकालीनाक्षेपात् कर्मत्वं गोवृत्तिगोत्वनिष्ठकर्मतात्वादानयनं गोवृत्तिकर्मताकं गोत्ववृत्तिकर्मताकत्वादित्याद्यनुमानसाम्राज्यात्। न च वस्तुगत्या यद्गोत्वशक्तत्वं तज्ज्ञानस्य हेतुत्वे गोपदं जातिशक्तमित्येवं ग्रहादपि शुद्धगोत्वस्यान्वयबोधापत्तिः गोत्वत्वावच्छिन्नशक्तत्वप्रकारज्ञानत्वेन तथात्वे च लाघवाद्गोत्वावच्छिन्नशक्तताप्रकारकज्ञानत्वेनैव हेतुत्वं गोत्वत्वाद्यप्रवेशादिति वाच्यं गोपदं गोत्वशक्तमित्याकारज्ञानत्वेन हेतुतायां शुद्धस्यैव गोत्वस्य विषयितासम्बन्धेन शक्तांशे विशेषणत्वेन गोत्वत्वादिप्रवेशगौरवस्यायोगात्। न हि समवायान्यसम्बन्धेन जातेः प्रकारतायां धर्मावच्छिन्नत्वनियमो मानाभावात् अयं गौरित्यादिव्यवसायोत्तरमिमं गोत्वेन जानामीत्याकारे तस्य ज्ञात-

तालिङ्गकानुमानेऽनुव्यवसाये वा व्यभिचाराच्च प्रागनुपस्थित्या गोत्वत्वादेस्तत्रोपनयायोगात्। एतेन जातेर्निरवच्छिन्नप्रकार त्वस्य समवाय संसर्गावच्छिन्नत्वनियमात् केवलस्य गोत्वादे शक्त्यंशे विषयतया सुबर्थकर्मत्वांशे च परम्परया प्रकारत्वायोग इत्यपि प्रत्युक्तम् उक्तस्थल एव व्यभिचारात्। न चैवं कालोगोः पदं गौरित्यादिप्रत्ययोऽपि प्रमा स्यात् कालिकादि सम्बन्धेन गोत्वादिमति तत्प्रकारकत्वादिति वाच्यं कालिकादि सम्बन्धेन गोत्वादेः प्रामाण्यस्य गोत्वत्वाद्यवच्छिन्नप्रकारता गर्भत्वेन तादृशमतेः प्रमात्वयोगात् अन्यथा घटत्वादिजाते संस्थानसमवेतत्वमते संयोगो घट इत्यादिप्रतीतेः समवायेन प्रमात्वस्य दुर्वारतापत्तेः शाब्दस्येव प्रत्यक्षस्यापि कालोगौरि त्यादिबोधस्य नियमतो गवाद्यभेदावगाहित्वनैवाप्रमात्वसम्भवा च्चेति भट्टमतानुवर्त्तिनः। तन्मन्दं विनाप्याक्षेपं गामानये त्यादितो गवादिकर्मताकत्वेनानयनादेरन्वयबोधस्यानुभविक त्वात् गौर्गच्छतीत्यादौ शुद्धगोत्वे गतिमत्त्वाद्यन्वयस्यानुभवेना स्पर्शनात् गोत्वत्वाद्यनुपस्थित्या च गोत्वं गच्छतीत्याद्यनुभवस्या सम्भवात् स्वाश्रयवृत्तित्वसम्बन्धेन गतिमत्त्वादिहेतुना गवादे साक्षात्सम्बन्धेन गतिमत्त्वाद्याक्षेपस्य व्यभिचारादिदोषे दुःशकत्वाच्च। एतेन कर्मत्वादौ गोत्वादेः स्वाश्रयवृत्तित्व सम्बन्धेनान्वयबोधोत्तरं कर्मत्वस्य गोत्ववृत्तित्वं गोवृत्तित्वं विनानुपपन्नमित्यनुपपत्तिधीसहकृतेन गामित्यादिवाक्येन कर्मत्वं गवीयमित्यौपादानिकोगवादिव्यक्तेर्बोध इति श्रोकार मतमप्यनादेयं मिथोविरुद्धाभ्यां शाब्दत्वार्थापत्तित्वाभ्या वच्छिन्नबोधस्यालीकत्वेन शब्दानुपपत्तिभ्यां सम्भूय तथाविधौ पादानिकबोधस्य जननायोगाच्च। यत्तु गौर्ज्ञायते गौर्नश्या सर्वत्र गोत्वादिजातिशक्त्यैव गवादिपदेन लक्षणया गोत्वादि

विशिष्टा व्यक्तिर्बोध्यते व्यक्तीनां बहुत्वेनान्यलभ्यत्वेन च तत्र शक्तेरकल्पनात् तात्पर्य्यानुपपत्तेरपि लक्षणाया बीजत्वात् यदाहुर्मण्डनाचार्य्याः जातेरस्तित्वनास्तित्वे न हि कश्चिद्विवक्षति । नित्यत्वाल्लक्षणीयाया व्यक्तेस्ते हि विशेषणे इति तदपि तुच्छं व्यक्तिविनाकृतायां गोत्वादिजातौ गवादिपदस्य मुख्यप्रयोगाभावेन तन्मात्रस्याशक्यत्वे तद्वति गवादौ लक्षणाया वक्तुमशक्यत्वात् शक्यसम्बन्धस्यैव लक्षणात्वात् । न च गोरन्योऽस्ति घट इत्यादौ पञ्चम्यर्थेऽवधित्वे प्रतियोगित्वे वा स्वावच्छेद्यत्वसम्बन्धेन शुद्धस्य गोत्वादेरन्वयात्तथाविधस्थल एव जातौ मुख्यप्रयोगः तत्र पञ्चम्याः स्वार्थेऽवधित्वादौ स्वनिष्ठगोत्वावच्छेद्यत्वसंसर्गेण प्रकृत्यर्थस्य गवादेरन्वयबोधकत्वात् अन्यथा गोगोत्वयोर्भक्तिशक्तिभ्यां गोपदेन बोधने वृत्तिद्वययौगपद्यापत्तेः वस्तुतः शुद्धस्य गोत्वादेः शाब्दधीप्रकारतायाः समवायावच्छिन्नत्वनियमात्तस्यावधित्वादौ स्वावच्छेद्यत्वादिसम्बन्धेनानान्वयो द्रुघट एव द्रव्यं घट इत्यादिप्रतीतिः समवायेन प्रमात्वानुरोधाद्घटत्वजातेर्नानात्वोपगमादिति ।

प्राभाकरास्तु गोत्वशक्तत्वेन ज्ञातं पदं ताद्रूप्येण गोशाब्दत्वावच्छिन्नं प्रत्येव हेतुरतो गोत्वशक्तिग्रहान्न गोत्वेन गवयादेः न वा द्रव्यत्वादिना गोरन्वयधियोऽतिप्रसङ्गः । न चैवं जातेरिव व्यक्तेरपि शक्यत्वमावश्यकं न हि गवादिपदस्य शक्यत्वं जन्यत्वमपि तु जन्यशाब्दधीविषयत्वं तच्च गोत्वस्येव गोरप्यविशिष्टमिति वाच्यं गवादिपदधर्मिकस्वशक्तताज्ञानत्वावच्छिन्नशाब्दधीजनकतावच्छेदकत्वेन गोत्वादेरेव गवादिपदशक्यत्वात् गोत्वशक्ततापेक्षया गोशक्तत्वस्य गुरुतया तज्ज्ञानत्वस्य गोशाब्दं प्रति जनकतानवच्छेदकत्वात् । अतएवान्वयबुद्धेरात्मस्वात्मत्वाद्यवगाहित्वेऽपि न तेषां पदशक्यत्वम् अस्तु वा गोत्वादि-

शक्तत्वेन ज्ञातं पदं गोत्वादिशाब्दत्वावच्छिन्नं प्रत्येव हे
विशेष्यतया तादृशशब्दं प्रति समवायेन गोत्वस्य नियाम
कत्वकल्पनाच्च नातिप्रसङ्गः गोत्वादिना गवादेरिव गवादेगो
त्वादिनान्वयबोधत्वाच्छिन्नं प्रत्यपि विनिगमकाभावेन गोत्वादि
शक्तिज्ञानत्वेन हेतुत्वमपेक्ष्य गोत्वशाब्दत्वावच्छिन्नं प्रत्ये
गोत्वस्य तच्छक्तत्वज्ञानस्य च द्वयोः कारणतायामेव लाघवा
वस्तुतो गोत्वशाब्दं प्रति गोत्वशक्तिज्ञानमेव हेतुर्न तु गोत्वश
जातिव्यक्त्योस्तुल्यवित्तिवेद्यत्वनियमादेव गोव्यक्त्योर्नां तद्विषयत्व
सिद्धेः प्रमाणविरहादेव गोत्वादिना गवयादिविषयत्वस्य तव
सिद्धेश्च । यद्यपि जातेर्विषयत्वं तत्समवायिव्यक्तिविषयता
निरूपितमिति न व्याप्तिर्गोत्वाद्यालोचने काले गोत्ववानि
त्वादिबोधे च व्यभिचारात् नापि जातेर्निरवच्छिन्नप्रकारताया
स्तथात्वनियमः गौरयमित्यादिज्ञानस्य प्रत्यक्षे गोत्वेनेमं जाना
मानाकारे तथात्वात्तथाप्यन्वयबोधस्य निरवच्छिन्नगोत्वादि
प्रकारत्वं गवादिविशेष्यतानिरूपितमेवेति व्याप्तिस्तादृश
विशेष्यताकत्वं विना शुद्धस्य गोत्वादेरन्वयबोधेनाकर्षनाद
गुरूणां गोत्वेन गवयादिबोधस्यालीकत्वात् । अतएव गवादं
गोत्वादिप्रकारको बोधः समवायेनेव सम्बन्धान्तरेणापि तद
प्रकारकः स्याच्छक्तिज्ञानस्य तदीयसम्बन्धभानं प्रत्युदासीन
त्वादित्यपि प्रत्युक्तं शाब्दमतेः शुद्धगोत्वप्रकारतायां गोविशेष्य
ताकत्वस्येव समवायावच्छिन्नत्वस्यापि व्याप्तिबलेन सिद्धावि
सम्बन्धान्तरावच्छिन्नत्वस्य प्रमाणविरहेणासिद्धेः । एव
गोत्वादिशक्तिज्ञानत्वेन जनकतायां विषयतयावच्छेदकत्व
गोत्वादेरिव गवादिपदस्यार्थः गवादौ तत्रावच्छादस्तु तादृशाव
च्छेदकधर्मवत्वप्रयुक्तो गौणः । नचैवं गत्यादिधातोर्
गत्यादौ शक्तिर्न स्याद्गतित्वादिशक्तिज्ञानादेव तादृश

शादेर्गम्यादिधातुतो बोधसम्भवादिति वाच्यं गुरूणां गति-
ादेः संस्थानाव्यङ्ग्यत्वेन जातित्वासम्भवात् उत्तरसंयोगाद्यव-
च्छिन्नक्रियात्वाद्युपाधिरूपे च तत्र स्वरूपतः शक्तिग्रहायोगात्
खण्डस्य निरवच्छिन्नप्रकारत्वाभावात् निरुक्तक्रियात्वत्वाव-
च्छिन्नशक्तताज्ञानत्वेन हेतुतामपेक्ष्य लघुतया तादृशक्रियात्वाव-
च्छिन्नशक्तिमत्त्वज्ञानत्वेनैव तथात्वौचित्यात् गुरुत्वादिप्रयोज्यस्य
पतनत्वादेरखण्डत्वे पत्यादिधातूनां तत्र शक्तत्वेऽपि जात्य-
भावाच्च पश्वादिपदानामपि लोमवल्लाङ्गूलादिपर्यवसिते पशु-
त्वादिमात्रे न शक्तिस्तत्र तत्र शक्तिग्रहोत्तरं तन्मात्रस्यैवानु-
भवेन तदाश्रयस्यालाभात् लोमादीनां स्वाश्रयतुल्यवित्तिवेद्य-
त्वस्य लोमवल्लाङ्गूलवान् देश इत्याद्यनुभवे व्यभिचारादिति-
प्राहुः। तत्र ब्रूमः शाब्दमतेर्गवादिव्यक्त्यवगाहित्वमवश्यङ्का-
रणप्रयोज्यं जन्यधीविषयतायास्तत्प्रयोज्यत्वनियमादन्यथा
पक्षधर्मिकसाध्यावगाहितादेरपि परामर्शादिप्रयोज्यता न
स्यादनुमत्यादि सामान्यं प्रत्येव ज्ञानत्वादिना हेतुत्वस्य लाघवे-
नौचित्यात् पक्षतादि सहकृतपरामर्शाव्युत्तरज्ञानस्य तत्प्रकाश-
स्यैव वा पक्षे साध्यावगाहित्वनियमादेवानुमित्यादेः प्रति-
नियतपक्षाद्यवगाहित्वसिद्धेः। किञ्च गोत्वशक्तत्वं न गोत्व-
समर्थत्वं यस्य धर्मान्वयधीहेतुरप्रसिद्धत्वात् नापि तद्गोचर-
अभिधानात्मकं पदार्थान्तरं तत्र मानाभावात् न वा गोत्वानु-
भवजनकत्वं पटादिपदस्यापि गोत्वशक्तत्वापत्तेस्तस्यापि गवादि-
पदाकाङ्क्षादिसाचिव्येन गोत्वानुभवजनकत्वात् न च गोत्वानु-
भवसामान्यं प्रति हेतुत्वं तथा गवादिपदेऽप्यसत्वात् नापि
गोत्वानुभवजनकत्व प्रकारकनित्यसङ्केतवत्त्वं तादृशसङ्केतवत्त्व-
मात्रं वा गोत्वशक्तत्वमिति साम्प्रतं गोपदं गोत्वेन गवानुभवस्य
जनकतया न सङ्केतितमित्यादिग्रहेऽपि तस्य ग्रहाद्गोत्वेन

गोरन्वयधीप्रसङ्गात् किन्तु गोत्वेन गवानुभवस्य जनकतय सङ्केतितत्व तथा तथा च पदधर्मिक तज्ज्ञानत्वेन गोत्वप्रकारकशाब्दं प्रति हेतुतायां गोत्वस्येव तद्विशिष्टस्य गोरपि विषयविधयावच्छेदकत्वादवश्यं गोत्वादिविशिष्टा गवादिर्गवादिपदस्यार्थः।

स्यादेतत् निरुक्तस्येव सङ्केतस्य कुतः प्रथमतो ग्रहः नोपमानान्न कोषान्न विवरणान्न प्रसिद्धार्थशब्दसामानाधिकरण्यान्नापि वाक्यशेषादमीषां शक्तिग्रहमूलकत्वेन पूर्वं पृथुकस्य कस्यापि तदसत्वादत आह।

सङ्केतस्य ग्रहः पूर्वं वृद्धस्य व्यवहारतः।
पश्चादेवोपमानाद्यैः शक्तिधीपूर्वकैरसौ॥

प्रथमं पदेषु सङ्केतग्रहो वृद्धस्य व्युत्पन्नस्य शब्दाधीनव्यवहारादेव वालानां तथा हि गामानयेति केनचिन्निपुणेन नियुक्तः कश्चन व्युत्पन्नस्तद्वाक्यतोऽर्थं प्रतीत्य गवानयनं करोति तच्चोपलभमानो वाल इदं गवानयनं स्वगोचरप्रवृत्तिजन्यं चेष्टात्वान्मदीयस्तनपानादिवदित्यनुमाय सा गवानयनप्रवृत्तिः स्वविषयधर्मिककार्य्यताज्ञानजन्या प्रवृत्तित्वं निजप्रवृत्तिवदिति प्रवृत्तेर्गवानयनधर्मिककार्य्यताज्ञानजन्यत्वं प्रसाध्य गवानयनगोचरतज्ज्ञानसाधारणहेतुकं कार्य्यत्वाद्घटवदित्येव मनुमिन्वानः समुपस्थितत्वाल्लाघवाच्च स्रुतं वृद्धवाक्यमेव तदसाधारणकारणत्वेनावधारयति तदनन्तरञ्च गवादिपदानां प्रत्येकमावापोद्वापेन गवादिवुद्धौ जनकत्वमवगत्यानतिप्रसक्तये गवादिसङ्केतस्य तदनुकूलत्वं कल्पयति। पश्चात्तु क्वचिदुपमानाच्छक्तिग्रहो यथा गवादि दर्शनाधीसाचिव्येन गोसादृश्यातिदेशवाक्यात् गवयपदवाच्यत्वबोधोत्तरं गवयत्वजात्यवच्छिन्ने गोसादृश्यग्रहात् गवयो गवयपदवाच्य इत्याकारः क्वचिच्च व्याकरणात्

यथा कर्मणि द्वितीया कर्त्तरि परस्मैपदमित्याद्यनुशासनात् कर्मत्वादौ द्वितीयादेः क्वचित् कोषादपि यथा गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति। शौक्लं गुणे तद्वदर्थाः सुशीमः शिशिरो जड़ः। चूर्णे चोदः समुत्पिञ्जपिञ्जलौ भृशमाकुले इत्यादि कोषेभ्यः श्वैत्यादौ शुक्लादिशब्दस्य। क्वचिद्विवरणादपि यथा पचति पाकं करोतीति तुल्यार्थकवाक्यात् कृत्यादौ तिङादेः। क्वचित् प्रसिद्धार्थशब्दसामानाधिकरण्यादपि यथा नीरूपस्पर्शवान् वायुर्निःस्पर्श मूर्त्तिमन्मन इत्यादौ रूपशून्यस्पर्शवदादिषु वाय्वादिपदस्य वायुत्वादिजातेरतीन्द्रियत्वेन स्वरूपतस्तदवच्छिन्नस्यानुपस्थित्या तत्र शक्तिग्रहायोगात् यथा वा सत्कृत्यालङ्कृतां कन्यां ददानः कुकुदः स्मृत इत्यादावुक्तरीत्या कन्यादात्रादिषु कुकुदादिपदस्य। सहकारतरौ मधुरं रौति पिक इत्यादिकन्तु न युक्तमुक्तक्रमेण शक्तिग्रहस्योदाहरणं तिङर्थे धर्मिण्यभेदेन नामार्थान्वयस्याव्युत्पन्नत्वात् प्रत्यक्षसिद्ध कोकिलत्वजात्यवच्छिन्न एव लाघवेन पिकशब्दस्य शक्त्यवच्छेदाच्च। क्वचिद्वाक्यशेषादपि यथा यवपदस्य कङ्गुप्रभृतौ म्लेच्छानां दीर्घशूके च शिष्टानां व्यवहारादेकमात्रशक्तेः परिच्छेत्तुमशक्यत्वात् नानार्थत्वस्य चान्याय्यत्वात् यवमयश्चरुर्भवतीति श्रुतौ यवपदस्यार्थसन्देहे वसन्ते सर्वशस्यानां जायते पत्रशातनम्। मोदमानास्तु तिष्ठन्ति यवाः कणिशशालिन इति विध्यर्थाकाङ्क्षया प्रवर्त्तमानाद्वाक्यशेषाद्दीर्घशूक एव यवपदस्य शक्तिग्रहः। यथावा स्वाराज्यकामोऽग्निष्टोमेन यजेतेत्यादिविधिशेषीभूतेभ्यः यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम्। अभिलाषोपनीतं च तत्सुखं स्वपदास्पदमित्यादिवाक्येभ्यः स्वरादिपदस्य।

ननु व्यवहारादनुमितेर्गवाद्यानयनधर्मिककार्य्यतान्वयज्ञाने

पदानां प्रथमतः कारणत्वं साकाङ्क्षपदत्वावच्छेदेनैव गृही
मुपस्थितत्वादतस्तदुपपत्तये शाब्दसामान्यं प्रत्यवश्यं कार्यत
वाचिपदस्य तत्साकाङ्क्षपदस्य वा हेतुत्वमुपेतव्यं तथाच क
केवलकोषादितः शक्तिग्रहस्तस्य विध्यनाकाङ्क्षत्वेनाथवादत
शाब्दबोधाजनकत्वादिति प्राभाकराशङ्कां निरस्यति।

कार्यत्वस्यान्वयज्ञाने प्राग्गृहीतापि हेतुता।
पदानामर्थवादेभ्यः पश्चाद्बोधादुपेक्ष्यते॥

साकाङ्क्षपदत्वावच्छेदेन कार्यताधीजनकत्वं पूर्वंगृहीत
मप्युत्तरकालमर्थवादेभ्यः शाब्दबोधानुरोधादुपेक्ष्यते पूर्वंगृहो
तस्य अपरित्याज्यत्वानियमात् प्रतिविशिष्टे वस्तुनि व्यभिचारा
नवोपस्थितधर्मावच्छेदेनैव जनकत्वस्य ग्रहनियमः पटजन
देयद्रव्यमित्यादौ तत्सामानाधिकरण्येनापि ग्रहात् अन्यथा
न्यथाख्यात्यापत्तेस्तत्रैव दुर्वारतापत्तेः। न च कार्यतासाकाङ्क्ष
पदान्तर्भाविणैव शब्दानामन्वयानुभवहेतुत्वस्य क्लृप्तत्वादर्थवा
स्थले न शाब्दधीः परन्त्वसंसर्गाग्रहमात्रमाकाङ्क्षान्तरकल्प
गौरवादिति दिनाच्च कार्यतानिराकाङ्क्षपदान्तर्भाविणैव शाब्दधी
हेतुत्वस्य कल्पनया विधिस्थले न शाब्दधीरित्यस्यापि सुव
त्वात् उभयत्राप्यन्वयमतेरानुभविकत्वेनैकशेषस्य दुष्करत्
दिति दिक्।

पारिभाषिकीमौपाधिकीञ्च संज्ञां क्रमेण लक्षयति।

उभयावृत्तिधर्मेण संज्ञा स्यात् परिभाषिकी।
औपाधिकी त्वनुगतोपाधिना या प्रवर्त्तते॥

उभयावृत्तिधर्मावच्छिन्नसङ्केतवती संज्ञा पारिभाषि
यथाकाश डित्यादिः साहि द्वितयावृत्तिनैव शब्दादिना रूपं
तदाश्रयमभिधत्ते नचाकाशादिपदस्य गगनादौ निरवच्छिन्न
शक्तिः पटादिपदस्यापि पटादौ तादृशशक्त्यापत्तेः पटे शक्त

पटपदं न पटत्वावच्छिन्नशक्तिमदित्यादिशङ्कोत्तरं ततः पटत्व-विशिष्टस्याननुभवादवश्यं तच्छक्तिरवच्छिन्नेति चेत् शब्दवति शक्तमप्याकाशपदं न शब्दवत्त्वावच्छिन्नशक्तिमदित्येवं शङ्कदशायामाकाशादिपदान्न शब्दवत्त्वेन गगनस्य प्रतीतिरतस्तस्यापि शब्दवत्त्वावच्छिन्नैव तत्र शक्तिरिति विभाव्यताम्। एतेन पटत्वाद्युपलक्षिते धर्मिण्येव शक्तिग्रहस्य ताद्रूप्येण पटाद्यनुभवं प्रति हेतुत्वान्मास्तु पटादिपदस्यापि पटत्वाद्यवच्छिन्ने शक्तिः परन्तु पटत्वाद्युपलक्षितव्यक्तिष्वेवेति शिरोमण्युक्तमपि प्रत्युक्तं शब्दोपलक्षिते धर्मिणि शक्तिग्रहादेवाकाशादिपदात्तदंशे निर्विकल्पकात्मकस्मरणमन्वयानुभवश्चोत्पद्यत इति तु नानुभविकं न वा यौक्तिकम्। या चानुगतोपाध्यवच्छिन्नसङ्केतवती संज्ञा सा त्वौपाधिकी यथा भूतदूतादिः सा हि सचेतनावृत्तिविशेषगुणवत्त्ववार्त्ताहारकत्वाद्यनुगतोपाधिपुरस्कारेणैव प्रवर्त्तते शब्दादिस्तु सखण्डत्वेनोपाधिरपि नानुगतो हितयावृत्तित्वादतः पारिभाषिकी गगनादिपदे नातिप्रसङ्गः। घटत्वादेः संस्थानवृत्तित्वमते यदि घटादिपदं विलक्षणसंस्थानवत्त्वेन शक्तं तदौपाधिकमेव यदि च परम्परया वैलक्षण्यवत्त्वेन तदा नैमित्तिकमेव वस्तुतः सामान्यस्य शाब्दबुद्धौ स्वरूपतः प्रकारत्वं स्वसमवायेनैवेत्यभिहितं प्रागिति।

ये तु जात्यवच्छिन्नसङ्केतवतामपि चैत्रादिपदानां पारिभाषिकत्वमाहुस्तेषां मते त्रैविध्यमन्यथा निर्वक्ति।

यद्वाधुनिकसङ्केतशालित्वात् पारिभाषिकम्।
जात्या नैमित्तिकं शक्तमौपाधिकमुपाधिना॥

यत्रार्थे यन्नामाधुनिकसङ्केतवत्तदेव तत्र पारिभाषिकं यथा पित्रादिभिः पुत्रादौ सङ्केतितं चैत्रादि यथावा शास्त्रकृद्भिः सिद्धप्रभावादौ पचतादि। जात्यवच्छिन्नशक्तिमन्नाम नैमित्तिकं

यथा गोगवयादि। यदुपाध्यवच्छिन्नशक्तिमन्नाम तदौपाधिक
यथाकाशपक्षादि। आधुनिकस्तु सङ्केतो न शक्तिर्नित्यसौ
तस्य तथात्वात्। तदुक्तं भर्तृहरिणा। आजानिकश्चाधुनिक
सङ्केतो द्विविधो मतः। नित्य आजानिकस्तत्र या शक्तिरिति
गीयते। कादाचित्कस्त्वाधुनिकः शास्त्रकारादिभिः कृ
इति। न च पित्रादिना सङ्केतिते चैत्रादिपदे नित्यसङ्केत
वत्त्वे मानमस्ति द्वादशेऽहनि पिता नाम कुर्य्यादिति श्रुते
पितृकर्त्तव्यसङ्केतविधायकमात्रत्वात् चैत्रादिपदस्य शक्तिरूपत्वे
पूर्वपूर्वप्रयुक्तत्वापाताच्च तस्य तन्नियतत्वादित्युक्तत्वात् चैत्रादि
पदानामिव पारसीकादिशब्दानां सङ्केतवत्त्वाविशेषेऽपि न तेष
धर्मकर्मस्वप्रयोगः साधुर्भाषितव्यं नापभ्रंशित वै न म्लेच्छितवै
इति श्रुत्या तत्र तन्निषेधात् म्लेच्छितवै म्लेच्छमात्रसङ्केतितैः
खरादिशब्दास्तु रासभादौ म्लेच्छैरिवार्य्यैरपि सङ्केतिताः
ननु गवादिपदं गोत्वादिनेव संस्थानप्रभेदेनापि विशिष्ट ए
गवादौ शक्तमिति तत्रापि तदौपाधिकं स्यात् न स्याच्छक
त्वाविशेषेऽपि गोत्वाद्यपेक्षया गुरुत्वेन संस्थानस्य गवादिपद
शक्यतानवच्छेदकत्वात्। न च संस्थानमशक्यमेव गवादि
पदस्येति देशनीयं गवादिपदाद्गोत्वादिजात्या इव सास्नादि
लक्षणविलक्षणाकृत्यापि नियमतो गवादेरनुभवेन तस्या
तच्छक्यत्वात्। तथाच न्यायसूत्रं जात्याकृतिव्यक्तयस्तु पदा
इति पदार्थो गवादिपदस्यार्थः त्रिष्वेकशक्तेर्लाभार्थमेकवचन
अन्यथा विभिन्नशक्ती विशकलितानामेव तासामनुभव
गौर्नित्या गुणो वेत्यादौ लक्षणाद्यभावस्य च प्रसङ्गादिति साम्प्र
दायिकाः। नव्यास्तु जातिव्यक्त्योरेवैकशक्तिप्राप्त्यर्थं सौत्र
मेकवचनं आकृतिरूपन्तु संस्थानं पृथगेव शक्यं शक्यत्वेऽपि
पक्षाप्ययोरप्याकृतिव्यक्त्योर्भेदान्वयबोधनं गवादिशब्देन व्यत

त्तिवैचित्र्यात् अतएव संस्थानानुपस्थितौ केवलगोत्वप्रकारेण व्यक्तेरवगमः शक्त्यैव सम्पद्यते। यद्येवं संस्थानव्यक्त्योरेवैकशक्तिर्गोत्वादिजाताविव शक्त्यन्तरं तद्वैशिष्ट्यन्तु पदार्थविधया युष्माकमिवास्माकं वाक्यार्थं इत्येव किं न स्यात् न स्यात् समवायेन गोत्वादिमदपेक्षया परम्परया संस्थानवतः परमगुरुत्वेनाशक्यत्वात् शक्यतायाः किञ्चिद्धर्मावच्छिन्नत्वनियमात् शुद्धगोत्वादौ तदयोगाच्चेत्याहुः। मिथो वैशिष्ट्यविधुराभ्यां चन्द्रत्वसूर्य्यत्वाभ्यामवच्छिन्नैकशक्तिमतः पुष्पवन्तपदस्येव गोत्वसंस्थानप्रभेदाभ्यामवच्छिन्नैकशक्तिमतो गवादिपदस्यापि जात्यवच्छिन्नशक्तिमत्तया नैमित्तिकसंज्ञात्वेऽपि नौपाधिकसंज्ञात्वं सखण्डोपाधिमात्रावच्छिन्नशक्तिमत एव नाम्नस्तथात्वादिति वस्तुगतिः। सौत्रमाकृतिपदं न संस्थानपरं परन्तु करणव्युत्पत्त्याकारनिरूपकार्थकं जातिव्यक्त्योः संसर्गपरमेव अन्यथा समवायादेरपि सम्बन्धविधया गवादिपदशक्यत्वेन तदनुक्त्या सुनेर्न्यूनतापत्तेः। क्वाचित्कस्तु जातिसंस्थानाभ्यां गवादेरवगमो गवादिपदस्य जात्याकृतिविशिष्टे शक्तिभ्रमेण लक्षणया वा सम्पाद्य इति पुनर्न्यायरहस्ये अस्मद्गुरुचरणाः।

लक्षकं नाम लक्षयति।

याद्दशार्थस्य सम्बन्धवति शक्तन्तु यद्भवेत्।
तत्र तल्लक्षकं नाम तच्छक्तिविधुरं यदि॥

याद्दशार्थसम्बन्धवति यन्नाम सङ्केतितं तदेव ताद्दशार्थे लक्षकं यदि ताद्दशार्थे शक्तिशून्यं भवेत् सैन्धवादयश्च शब्दास्तुरगादिसम्बन्धिनि लवणादाविव तुरगादावपि शक्ता एव गङ्गादयस्तु तीरादावसङ्केतिताः तत्सम्बन्धिनीरादिशक्तत्वेन गृहीता एव तीराद्यन्वयं बोधयन्तीति तत्र लक्षका एव शक्तत्वे

पूर्वपूर्वप्रयुक्तत्वापत्तेः तस्य तद्व्याप्यत्वात् कथञ्चित्तीरादिस
म्बन्धित्वेन गृहीतादपि गङ्गादिपदात्तीरादेरन्वयाबोधेन तीरा
शक्तत्वे सति तत्सम्बन्धितामात्रन्तु न लक्षणा गङ्गागङ्गायां घो
इत्यादावपि गङ्गागङ्गेतिभागस्य निरुक्तलक्षणायाः सत्त्वे
वैयर्थ्याभावप्रसङ्गाच्च । एतेन तीराद्यशक्तत्वे सति तीरादिपर
तीरादिसम्बन्ध्यनुभावकत्वं वा तल्लक्षकत्वमित्यपि प्रत्युक्त
अपभ्रंशस्यापि लक्षकत्वापाताच्च नचेष्टापत्तिः शक्तिलक्षणान्
तरवृत्तिमत्त्वे तस्य साधुतापत्तेः पदसाधुतायां वृत्तिमत्त्वस्
तन्त्रत्वात् । किञ्चानुभावकत्वं यद्यनुभवस्योपधायकत्वं तद
घोषादिपदसाकाङ्क्षस्य गङ्गादिपदस्य तीरलक्षकता न स्या
तेन तीरसम्बन्धिनो नीरस्यानुभवानर्जनात् स्वरूपयोग्यत्वं
गङ्गायामिति वाक्यस्य दुर्वारं तस्याप्याधेयताधर्मिकनीरानुभ
प्रति नीरार्थकनामोत्तरसप्तमीत्वेन तथात्वात् नीराधेयत्व
च तीरसम्बन्धित्वानपायात् । ननु वाक्यमपि लक्षकं भवत्वे
कथमन्यथा चित्रगुसमुदायस्य लक्षणया चित्रगोस्वामिनां बोध
कथं वा गभीरायां नद्यां घोष इत्यादौ गभीरनदीतीरस्य
हिं तत्र नदीपदं तीरलक्षकं गभीरायामित्यस्यान्वयापत्तेः नहि
तीरं गभीरं नापि गभीरापदं तथा नद्यामित्यस्यायोग्यतापत्ते
न हि तीरं नदी तस्माद्वाक्यमेव तत्र गभीरनदीतीरलक्षक
मिति मीमांसकाः तन्न गभीरायां नद्यामिति विभक्त्यन्तभागस
तादृशतीरलक्षकत्वे घोषादावाधेयत्वेन तदन्वयानुपपत्ते
समासादन्यत्र नामार्थयोर्भेदान्वयस्याव्युत्पन्नत्वात् । एते
तादृशतीरवृत्तितायामेव तद्भागस्य लक्षणयापि न निस्तार
तादृशतीरवृत्तेस्त लक्ष्यत्वे घोषादावभेदेन तदन्वयायोग
समासभिन्नस्थले नामार्थयोरभेदान्वये नाम्नोः समानविभक्ति
कत्वस्य तन्त्रत्वात् । न च गभीरायां नद्यामितिभागस्यै

तादृक्तीरलक्षकत्वं तदर्थे विभक्त्यर्थस्यानन्वयापत्तेर्नहि स भागः प्रकृतिर्येन तदर्थे विभक्त्यर्थस्यान्वयः स्यात् गभीरायां नद्यां व्रजेत्यादितोऽपि गभीरनदीतीरकर्मकत्वादिबोधापत्तेस्तद्भागस्य वाक्यादन्यत्वाच्च तस्माद्गभीरापदं नदीपदं वा तत्र गभीरनदीतीरलक्षकं पदान्तरन्तु तत्र तात्पर्य्यग्राहकमिति सिद्धान्तविदः। चट्पटाद्यनुकरणस्य हुम्फड़ादिस्तोभस्य च स्वानुभावकत्वमपभ्रंशानामिव शक्तिभ्रमादेव गौर्वाहीक इत्यादौ तु शक्यार्थसदृशत्वावच्छिन्नबोधकतया गौणं गवादिपदं गोसदृशादौ लक्षकमेव न ततो भिद्यते।

स्यादेतत् मुखं विकसितस्मितमित्यत्र विकसितपदेन विस्तृतार्थलक्षणया मुखस्य प्रकटितस्मितवत्तामनुभाव्योत्तरकालं कुसुमतुल्यसौरभादिमत्त्वं तस्य लक्षणामूलकव्यञ्जनया वृत्त्या बोध्यत इति रूढ़ादिवद्व्यञ्जकमपि शब्दान्तरमास्थेयं न हि तत्र विकसितादिपदं कुसुमसदृशादौ रूढ़मसङ्केतितत्वात् नापि यौगिकं स्वावयववृत्त्या तदप्रापकत्वात् नवा लक्षकं उपस्थितार्थान्वयानुपपत्तिधीरूपस्य लक्षणावीजस्य तत्राभावादित्यालङ्कारिकाः तत्र वदन्ति अन्वयानुपपत्तेर्लक्षणावीजत्वं न तज्जनकत्वं शक्यसम्बन्धात्मिकाया लक्षणायास्तदजन्यत्वात् नापि तज्ज्ञापकत्वं मुख्यार्थान्वयानुपपत्तिज्ञानमन्तरेणापि प्रमाणान्तरेण तद्ग्रहसम्भवात् अतएव न लक्ष्यार्थतात्पर्य्यग्राहकत्वमपि प्रकरणादितोऽपि लक्ष्यार्थपरत्वग्रहात् न च लक्षणाजन्यान्वयबोधं प्रति तस्याः कारणत्वमेव लक्षणावीजत्वमिति साम्प्रतं यष्टीः प्रवेशयेत्यादौ व्यभिचारात् तादृशहेतुतायां प्रमाणाभावाच्च। अथास्ति नानार्थशब्दैः प्रकरणादिसाचिव्यादेकविधानामर्थानामन्वयबुद्धेरनन्तरमप्यन्यविधानामन्वयानुभवः सहृदयस्य यथायं गौरवितो महान् इत्यादौ यथा वा वयस्या

नागरासङ्गादङ्गानां हन्ति वेदनामित्यादौ। सचाय मनुभ
न शक्तिधीप्रभवः शक्यार्थबुद्धौ तत्परत्वग्रहस्य तन्न्(ह)कप्र
रणाद्यवगमस्य वा हेतुत्वेन तदसत्त्वात् नापि लक्षणाप्रयु
शक्यार्थे तदयोगात् परन्त्वभिधामूलव्यञ्जनयैव सम्पाद्यः त
न्नाम् अनेकार्थस्य शब्दस्य प्रस्तावाद्यैर्नियन्त्रिते। एकत्रार्थे
धामूलव्यञ्जनान्यस्य बोधिका । इति चेन्न तात्पर्य्यधियो हेतुत्व
पूर्वं परास्तत्वात् अतएव प्रकरणादीनामननुगतानां क्वचि
सत्त्वेऽपि तत्त्वंभावात् वस्तुतः शक्त्याद्युपस्थितानामेकविध
पदार्थानामन्वयमतेरनन्तरं यद्यन्यविधाना मन्वयबोधः स्या
स्यादपि तदनुरोधेन व्यञ्जनास्वीकारः नचैवं तत्तदर्थकशाब्द
सामान्यं प्रत्येव तत्तदर्थनिरुक्तात्पर्य्यकत्वधियः प्रतिबन्धकत्व
तत्तदर्थानां यथा कथञ्चिदुपनयवशेन मनसैव विशिष्टधीसम्भ
वात् मानोरथिकसुखप्र-देपर्य्यवसितं चमत्कारं प्रत्य
शाब्दस्येव मानसस्यापि बोधविशेषस्य हेतुतायाः सुवचत्व
व्यञ्जनाख्यपदार्थान्तरस्य स्वरूपसत्तया अन्वयबुद्धौ तद्धेतुत्व
च प्रमाणविरहेणासत्त्वाच्चेति संक्षेपः।

लक्षकं नाम विभजते ।

जहत्स्वार्थाजहत्स्वार्थनिरूढाधुनिकादिकाः ।
लक्षणा विविधास्ताभिर्लक्षकं स्यादनेकधा ॥

काचिल्लक्षणा शक्यावृत्तिरूपेण बोधकतया जहत्स्वा
त्युच्यते यथा तीरत्वादिना गङ्गादिपदस्य। काचिच्छक्यलक्ष्यो
भयवृत्तिना शक्यवृत्तिनैव वा रूपेणानुभावकत्वादजहत्स्वा
यथा द्रव्यत्वादिना नीलघटत्वादिना च घटपदस्य। काचि
ल्लक्ष्यतावच्छेदकीभूततत्तद्रूपेण पूर्वंपूर्वं प्रत्यायकत्वात् निरू
यथा आरुण्यादिप्रकारेण तदाश्रयद्रव्यानुभावकत्वादरुणादि
पदस्य। काचिच्च पूर्वंपूर्वं ताद्रूप्येणाप्रत्यायकत्वादाधुनि

यथा घटत्वादिना पटादिपदस्य। आदिना शक्यसदृशत्व-प्रकारेण बोधकतया गौण्युपगृह्यते यथा अग्निर्माणवक इत्यादावग्निसदृशत्वादिना अग्न्यादिपदस्य। तदेवं विविध-लक्षणावत्वाल्लाक्षणिकं नामापि जहत्स्वार्थादिभेदादनेकविध-मित्यर्थः। स्यादेतत् यदि तीरादिलक्षकतया गङ्गादिपदस्य ज्ञानं तीराद्यनुभवे भवेद्धेतुर्भवेदप्युक्तक्रमेण लक्षकाणां विभागः नत्वेतदस्ति तीराद्यन्वयबोधं प्रति तीरादिशक्तत्वेनैव पदज्ञानस्य लाघवेन हेतुतया लक्षकाणामननुभावकत्वात् गुरूणामस्मौ शैत्यं स्पृशेदित्यादौ शक्त्येन दहनादिनेव गङ्गायां घोष इत्यादौ लक्षितेन तीरादिना सार्द्धमग्रहीतासंसर्गकस्यैव सप्तम्यर्था-धेयत्वादेरन्वयबोधप्रविष्टत्वादिति चेन्न प्रकृत्यर्थावच्छिन्नस्यैव प्रत्ययार्थस्य धर्म्यन्तरेऽन्वयबुद्धेरनुत्पन्नतया तीराद्यविशेषितस्य सुबर्थाधेयत्वादेर्घोषादावन्वयबोधायोगात्। न च शक्तस्यैव पदस्य स्वसमाकाङ्क्षपदान्तरोपस्थाप्यार्थान्वितस्वार्थधर्मिकान्वय-बोधं प्रति हेतुत्वादन्वयबुद्धौ लक्ष्यार्थस्य प्रवेशः कुन्ताः प्रवि-शन्तीत्यादौ लक्ष्यस्य कुन्तधरादेरन्वयविशेष्यत्वानुपपत्तेः कुमतिः पशुरित्यादौ लक्ष्यार्थयोर्मिथोऽन्वयबोधस्याप्यानुभविकत्वाच्च तस्माच्छक्तेरिव भक्तेरपि ज्ञानमनुभावकं भवत्येव कार्यताव-च्छेदकस्य सङ्कोचाच्च न व्यभिचारः।

योगरूढं नाम लक्षयति।

स्वान्तर्निविष्टशब्दार्थस्वार्थयोर्बोधकृन्मिथः।
योगरूढं न यत्रैकं विनान्यस्यास्ति शाब्दधीः॥

यन्नाम स्वावयववृत्तिलभ्यार्थेन समं स्वार्थस्यान्वयबोधकृत् तन्नाम योगरूढं यथा पङ्कजकृष्णसर्पाधर्मादि तद्धि स्वान्त-र्निविष्टानां पङ्कादिशब्दानां वृत्तिलभ्येन पङ्कजनिकर्त्रादिना समं स्वशक्यस्य पद्मादेरन्वयानुभावकं पङ्कजमित्यादितः पङ्कज-

निकर्तृ पद्ममित्यनुभवस्य सर्वसिद्धत्वात् । इयांस्तु विशेषः यद्रूढमपि मण्डपरथकारादिपदं योगार्थविनाकृतस्य रूढ्यर्थस्यैव रूढ्यर्थविनाकृतस्यापि योगार्थस्य बोधकं मण्डपे शेते इत्यादौ योगार्थस्य मण्डपानकर्त्रादेरिव मण्डपं भोजयेदित्यादौ समुदितार्थस्य गृहादेरयोग्यत्वेनान्वयाबोधात् । योगरूढन्तु पङ्कजादिपदमवयववृत्त्या रूढ्यर्थमेव समुदायशक्त्या चावयवलभ्यार्थमेवानुभावयति नत्वन्यं व्युत्पत्तिवैचित्र्यात्तथैव साकाङ्क्षत्वात् । अतएव पङ्कजं कुमुद मित्यत्र पङ्कजनिकर्तृत्वेन भूमौ पङ्कजमुत्पन्न मित्यादौ च पद्मत्वेन पङ्कजपदस्य लक्षणयैव कुमुदस्थलपद्मयोर्बोध इति वार्त्तिकम् । ननु पुष्पं पङ्कजेत्यादौ पङ्कजादेरन्वयस्याबोधात् बोधाच्च पङ्कजपुष्पमित्यादौ निर्विभक्तिकेन पङ्कजादिपदेनोपस्थाप्यार्थस्यान्वयधीसामान्यं प्रत्येव तादृशपङ्कजादिपदोत्तरशब्दोपस्थाप्यत्वं तन्त्रम् एवं पुष्पं पङ्कजमित्यादौ अन्वयबोधदर्शनात्तदनुरोधेन सविभक्तिकपङ्कजादिपदोपस्थाप्यार्थान्वयबोधं प्रति स्वसमानविभक्तिकपदोपस्थाप्यत्वञ्च अतस्तदुपस्थापितस्य पङ्कजातादेः कथं पदान्तरानुपस्थापिते पद्मादावन्वय इति चेदपङ्कजवृत्तिः सत्त्वेत्यादौ स्खलदक्षरसंशोभि तरुण्या मुखपङ्कजमित्यादौ च व्यभिचारादुक्तव्युत्पत्तेः सङ्कोचेनेति गृहाण । न च धेनुपदस्य धानकर्मत्वविशिष्टायां गवीव पङ्कजादिपदस्यापि पङ्कजातत्वादिविशिष्टपद्मादौ रूढिरेवास्तु न तु योगरूढिरिति साम्प्रतं अन्यत्र कॢप्तशक्तिभ्यः पङ्कजन्यादिपदेभ्य एवाकाङ्क्षादिसाचिव्येन पङ्कजनिकर्तृत्वादेर्लाभसम्भवे तद्विशिष्टस्य पद्मस्य गुरोः समुदायाशक्यत्वादनन्यलभ्यस्यैव शब्दार्थत्वात् । यद्यपि कर्तृवाचकडप्रत्यये एव पद्मत्वविशिष्टस्य लक्षणया लाभसम्भवान्न पङ्कजभागस्य तत्र शक्तिरुचिता प्रकारान्तरालभ्यस्यैव शब्दशक्यत्व-

मित्युक्तत्वात् कृतिवर्त्तमानत्वयोरिवैकपदार्थयोरपि कर्त्तृपद्मयोर्मिथोऽन्वयस्य सम्भवित्वात् तथाप्यवयवानां शक्तेरग्रहे ग्रहेऽपि वा पद्मादौ तदर्थस्यान्वयधीविरोधिधीदशायां पङ्कजमस्तीत्यादितः पद्ममस्तीत्याद्यनुभवार्थमवश्यं पद्मत्वादिविशिष्टे पङ्कजादिभागस्य रूढ़िरुपेया इतरथा प्रकृत्यर्थावच्छिन्नस्यैव प्रत्ययार्थस्य पदार्थान्तरेणान्वयस्य व्युत्पन्नतया डप्रत्ययोपस्थापितस्यापि पद्मस्यास्तित्वादिना सहान्वयानुपपत्तेः अतएव पङ्कजादिपदाग्रहीतशक्तिकस्य पुंसः पङ्कजमस्तीत्यादितो जात्वपि कर्त्तास्तीत्याकारको नान्वयबोधः प्रत्ययमात्रोपस्थाप्यस्य कर्त्तुरन्यत्रान्वये निराकाङ्क्षत्वादिति वक्ष्यते। किञ्चैवमेकाक्षरकोषावधृतशक्तिकानां कखादिप्रत्येकवर्णानामिव निरूढ़लक्षणया तत्तदर्थानुभावकत्वसम्भवाद्बकनखादिसमुदायस्यापि तत्तदर्थे शक्तिर्विलीयेत कादिप्रत्येकवर्णस्य शक्तिग्रहं विनापि बकादिशब्दाद्बकादेरनुभवार्थं तत्र समुदाये शक्तिरिति तु प्रकृतेऽपि समानं ड्वादिप्रत्ययमात्रस्य पद्मादौ वृत्तिमत्त्वाग्रहेऽपि पङ्कजादिसमुदायात् पद्मादेरनुभवस्य सर्वसिद्धत्वात्। नचैवं चित्रगुरित्यादावपि चित्रगोस्वाम्यादौ समुदायस्य शक्तिप्रसङ्गः समासत्वस्याविशिष्टत्वादिति वाच्यम् अगृहीतावयववृत्तिकस्य पुंसस्ततोऽर्थानधिगमेनावयवानां वृत्तेरवश्यापेक्षायां तेषामेव तथाविधार्थबोधकत्वौचित्यस्य वक्ष्यमाणत्वादिति।

पङ्कजादिपदेभ्यः केवलस्यैव योगार्थस्य रूढ्यर्थस्य वा बोधव्युदासार्थं तादृशार्थयोर्मिथः साकाङ्क्षत्वनियमो न कल्प्यते परन्तु रूढ्यर्थभिन्ने योगार्थस्य बोधं प्रति रूढ़िधियः प्रतिबन्धकत्वं तेन रूढ़ेरप्रतिसन्धानदशायामवयवशक्त्यैव पङ्कजं कुमुदमित्यादौ पङ्कजनिकर्तृत्वादिना कैरवादेरवगमस्तथावयवशक्तेरनुपस्थितौ समुदायशक्त्यैव भूमौ पङ्कजमुत्पन्नमित्यादौ

पङ्कत्वप्रकारेण स्थलपद्मादेरत एव च तैलपदं योगेन तिलप्र
रूढ्या च त्रिलक्षणाद्द्रवद्रव्यपर्य्यवसितं स्नेहं बोधयेद्योगरूढ़
तैलं पत्रमित्यादौ सर्षपस्य तैलमित्यादौ च शक्त्यैव प्रत्येक
बोधकमिति मीमांसकानां मतमुपन्यस्यति।

रूढ्यर्थभिन्ने योगार्थबुद्धौ रूढेर्विरोधिताम्।
वदन्ति केचिदेकैकबुद्धिस्ते: क्वचिदिष्यते॥

क्वचित्समुदायावयवयोरेकमात्रस्य शक्तिप्रतिसन्धानस्
यद्यपि पद्मान्यधर्मिकपङ्कजातत्वान्वयधीसामान्यं प्रति पङ्कज
पद्मशक्तमित्येवं रूढिज्ञानत्वेन न विरोधित्वं तादृशधीसत्त्वे
कर्दमजादिशब्देभ्यस्तादूप्येण कैरवादेरवगमात् नापि पङ्कजप
जन्यतादृशबोधं प्रत्येव तथा विरोधित्वं रूढ़िज्ञानदशायाम
समुदायस्य लक्षणया शक्तिभ्रमेण वा पङ्कजपदात् पङ्कजातत्वे
कुमुदबोधस्य सर्वैरुपगमात् तथाप्यवयवशक्त्या पङ्कजपदज
पद्मान्यधर्मिकपङ्कजातत्वान्वयबोधं प्रत्येव रूढ़िज्ञानत्वेन प्र
बन्धकत्वम्। न च कुमुद एव पद्मत्वेन रूढ़िभ्रमदशा
तादूप्येण कुमुदस्य बोधो न स्याद्विरोधिन्या रूढ़िधियः सत्त्व
दिति वाच्यं पद्मान्यधर्मिकेत्यनेन पद्मत्वानवच्छिन्नविशेष्यत
कत्वस्योक्तत्वात्। पद्मस्येव कुमुदस्यापि समुदायशक्यत्वं
दशायामवयवशक्त्या पङ्कजातं कुमुदमित्याकारकधीस्वीकारे
कुमुदादिशक्तत्वज्ञानाजन्यत्वेनापि प्रतिबध्यं विशेषणीयम्
न च यत्र तात्पर्य्यादिधीविलम्बादयोग्यताभ्रमादिना प्र
बन्धाद्वा रूढ्योपस्थिते पद्मे योगार्थस्य पङ्कजनिकर्त्तुरनन्वयस्त
वयवशक्त्या पङ्कजातत्वेन कुमुदादिबोधो न स्यात् विरोधि
रूढ़िज्ञानस्य सत्त्वादिति वाच्यं मीमांसकानामिष्टत्वात्
हि मण्डपं भोजयेत्यादावपि गृहादौ रूढ़िधीसत्त्वे मण्डपा
पदानामवयवशक्त्या मण्डपानकर्त्रादिर्न मन्यन्ते बोधं भ्रम

ग्रहानास्कन्दितस्यैव रूढ्यर्थगोचरतत्तदयोग्यताज्ञानाद्यभाव-
विशिष्टस्यैव रूढ़िज्ञानस्य विरोधितायाः सुवचत्वाच्च । यदि
च समुदाय एव पद्मत्वेन पङ्कजनिकर्तृत्वेन च शक्तिः प्रमाभ्र-
माभ्यां पङ्कजातं पद्ममित्याकारको बोधः प्रामाणिकस्तदानीं
च पङ्कजनिकर्तृत्वेन कुमुदस्य नान्वयधीः तदावयवशक्तेरत्य-
पहाय पङ्कजपदघटकशब्दशक्तेति प्रतिबध्यकुक्षौ निक्षेपणीयं
तद्घटकत्वञ्चेह तद्विषयिताव्यापकविषयिताकत्वमात्रं तदवयव
इव नत्वाद्यविशिष्टम् । यत्तु स्वावयवशक्त्या पङ्कजपदजन्यं
पङ्कजकर्तृत्वेनान्वयबोधं प्रति पद्मत्वं हेतुस्तत्र कार्य्यस्य
विशेष्यत्वं तदवच्छेदकत्वं वा कारणस्य तु समवायस्तादात्म्यं
वा प्रत्यासत्तिरित्येतावतैव योगार्थमर्य्यादया कुमुदादेर्बोध-
व्युदाससम्भवात् उक्तक्रमेण प्रतिबन्धकतायां मानाभावः पद्मत्वं
पङ्कजप्रयोगोपाधिरिति प्राचीनप्रवादस्याप्युक्तार्थ एव पर्य्यव-
सानादिति तत्तुच्छं पद्मागृहीतशक्तिकस्यापि पुंसः पङ्कजनि-
कर्तृत्वेनावयवशक्त्या कुमुदस्य बोधानुदयप्रसङ्गात् न चेष्टा-
पत्तिरनुभवविरोधात् न च रूढ़िज्ञानकालीनमेव योगार्थस्य
बोधं प्रत्युक्तरीत्या पद्मत्वस्य हेतुत्वं तथा सति रूढिधी-
दशायामपि तदसमानकालीनस्य पङ्कजातत्वेन कुमुदबोधस्य
सामान्यसामग्रीमहिम्ना दुर्वारतापत्तेः रूढिज्ञानासमानकालीन-
तादृशबोधं प्रति विशेषतो हेत्वन्तरस्याक्लृप्तत्वात् तत्कल्पने
चातिगौरवात् । यदपि पङ्कजननकर्तृषु पद्मादिपदानां
शक्तिसत्त्वेऽपि पङ्कजपदान्न ताद्रूप्येण बोधः परन्तु पद्मत्वमात्रेण
योगार्थमर्य्यादया पङ्कजातत्वप्रकारकबोधसामान्यं प्रत्येव
पद्मत्वविशिष्टे रूढिज्ञानस्य लाघवेन विरोधित्वात् पद्मान्य-
धर्मिकत्वादेर्गौरवेण प्रतिबध्यकोट्यप्रविष्टत्वादतो योगरूढं
नामैव नास्ति युधिष्ठिरादिशब्दादपि रणस्थिरत्वादिकं योगार्थं

परित्यज्यैव वैजात्यादिप्रकारेण कुन्तीपुत्राद्यवगमात् । यदुक्त मभियुक्तैः या वृत्तिरजहत्स्वार्था सेयमत्रोपपादिता । जहत् स्वार्था तु तत्रैव यत्र रूढ़िर्विरोधिनी ॥ पङ्कजं मनसादेव पद्मनाभो युधिष्ठिर इति । तदेतद्वैयाकरणमतं पङ्कमस्तीत्या दितः पङ्कजातं पद्मस्तीत्याद्यनुभवस्य न्यायमीमांसादिसकल तन्त्रसिद्धत्वेन गौरवस्य प्रामाणिकत्वादनादेयमन्यथा अवयव शक्तेरपि प्रतिबध्यतायामप्रवेशापत्तेर्लाघवेन पङ्कजातत्वप्रकारक शाब्दसामान्यं प्रत्येव रूढ़िधियः प्रतिबन्धकत्वस्य सुवचत्वात्। नन्वेवं द्रव्ये सरसिजमस्तीत्यादितो द्रव्यनिष्ठं सरोजमिव द्रव्याभिन्ने सरसिजातं पद्ममपि प्रतीयेत नामार्थयोरभेदान्वये तन्त्रस्य नाम्नोः समानविभक्तिकत्वस्यानपायादिति चेत् सत्यं सविभक्तिकनामार्थस्य नामान्तरान्वये वृत्तिशब्दैकदेशान्येनैव समानविभक्तिकनामान्तरेण स्मारितत्वस्य तन्त्रतायाः स्वीकार्य त्वादिति ।

यद्यदाकाङ्क्षितं योग्यं सन्निधानं प्रपद्यते । तेन तेनान्वितः स्वार्थः पदैः समधिगम्यत इति रूढ्यर्थयोगार्थयोर्युगपदुपस्थितौ तयोराकाङ्क्षादिसाचिव्यादाहत्यान्वयबुद्धिस्थल एव योगार्थस्य रूढ्यर्थस्य वा नान्यत्रान्वयो न तु तयोरेव मिथः साकाङ्क्षत्वं अन्यत्र योगार्थस्य बोधने रूढिधियः प्रतिबन्धकत्वं वा प्रमाणा भावात् एवञ्च यत्र योगरूढिलभ्यार्थयोस्तात्पर्य्याद्यग्रहादि रोत्रिसमवधानाद्वा न प्रथममन्वयधीस्तत्र योगार्थमर्य्यादया पङ्कजातत्वेन कुमुदादेः समुदायशक्त्या च पद्मत्वेन स्थल कमलस्य बोधो भवत्येवेति मणिकृन्मतं दर्शयति ।

रूढ्यर्थेऽन्यत्र वा यत्र यदाकाङ्क्षादिनिश्चयः ।
तदैव तत्र योगार्थस्यान्वयो मणिकृन्मतः ॥

समुदायशक्त्युपस्थापिते पदान्तरवृत्त्युपस्थापिते वा यत्र

धर्मिणि अवान्तरवृत्तिलभ्यार्थस्य यदाकाङ्क्षानिश्चयादिस्तदैव तत्र तस्यान्वयबोध उत्पद्यते सम्भूतसामग्रीकत्वात् रूढ्यर्थभिन्ने योगार्थस्यान्वयबोधव्युदासाय तु रूढेर्योगापहारिताप्रवादो रूढ्यर्थमात्रे योगार्थस्यान्वयबोधसामग्रीस्थलाभिप्रायक इति चिन्तामणिकृतां मतम्।

योगरूढं विभजते।

सामासिकं तद्धितान्तमिति तत् द्विविधं भवेत्।
योगरूढं कृदन्तस्य समासत्वव्यवस्थितेः॥

तत्र योगरूढं सामासिकं समासात्मकं कृष्णसर्पादि तद्धितान्तं वासुदेवादि। कृदन्तस्य पङ्कजादियोगरूढस्य सामासिक एवान्तर्भाव इति नाधिक्यम्।

यौगिकं नाम लक्षयति विभजते च।

योगलभ्यार्थमात्रस्य बोधकं नाम यौगिकम्।
समासस्तद्धितान्तश्च कृदन्तश्चेति तत्त्रिधा॥

यन्नाम स्वान्तर्निविष्टशब्दानां योगलभ्यस्यैव यादृशार्थस्यान्वयबोधं प्रति हेतुस्तन्नाम तादृशार्थे यौगिकम्। योगरूढन्तु कृष्णसर्पादिपदं योगेनावच्छिन्नस्य रूढ्यर्थस्य बोधकं न तु तन्मात्रस्य। तत्र यौगिकं त्रिविधं समासतद्धितान्तं कृदन्तञ्चेति द्वन्द्वोऽपि समासः स्वघटकशब्दानामाकाङ्क्षया लभ्यस्य धवखदिराद्यर्थस्यान्वयबोधकतया यौगिक एव। सर्वत्रेदं रूढान्यत्वेन विशेषणीयः नातः कृष्णसर्पादौ वासुदेवादौ पङ्कजादौ च योगरूढेऽतिप्रसङ्गः। ब्राह्मणी श्वश्रूः शूद्रेत्यादौ ङीबादेः स्त्रीत्ववाचित्वे तादृशं नाम यौगिकमेव अन्यथा तु स्त्रीत्वादिमति तत्तदर्थे रूढमेव नातो विभागस्य व्याघातः।

यौगिकेषु समासं लक्षयति ।

याद्दशस्य महावाक्यस्यान्त्यस्त्वादिर्निजार्थकः ।
याद्दशार्थस्य धीहेतुः स समासस्तदर्थकः ॥

याद्दशमहावाक्योत्तरस्त्वतलादिः स्वार्थस्य याद्दशार्थावच्छिन्न-विषयताशालिबोधे हेतुस्ताद्दशं तद्वाक्यं तथाविधार्थे समासः। पाचकादिकन्तु पाककर्त्राद्यर्थकं वाक्यमपि स्वघटकानेकनाम-लभ्यताद्दशार्थकत्वविरहान्न महावाक्यं प्रकृत्यर्थमात्रावच्छिन्न-प्रत्ययार्थस्यान्वयबोधं प्रत्ययोग्यत्वं वा प्रकृते वाक्यस्य महत्त्वं वाच्यं तेन उपकुम्भादौ नाव्याप्तिर्नवा नीलघटत्वमित्यादौ नीलघटत्वादिभागेऽतिप्रसङ्गः। चौरपायीत्यादिकस्तु प्रकृत्य-र्थावच्छिन्नकृदर्थस्यान्वयबोधे समर्थोऽपि न प्रकृत्यर्थमात्राव-च्छिन्नस्य ततः पानशीलसामान्यस्याप्रत्ययात् राज्ञः पुरुषत्व-मित्यादितो राजन्येव पुरुषभावः प्रतीयते न तु राजपुरुषस्य भावः तद्धितानां प्रकृत्यर्थमात्रान्वितस्वार्थबोधकत्वादतो राज्ञ पुरुषेत्यादिभागे न प्रसङ्गः। पायं पायमित्यादिणमन्तभागस्य स्वार्थावच्छिन्नस्य धात्वन्तरार्थस्यैवान्वयबोधकत्वे न तु त्वादि-प्रत्ययार्थस्य प्रस्थायेत्यादौ समासव्यपदेशो ल्यबादिशब्दसंस्कार-प्रयोजनको गौणः।

विभजते ।

स चायं षड्विधः कर्मधारयादिप्रभेदतः ।
यस्योपपदसंज्ञोऽन्यस्तेनासौ सप्तधा मतः ॥

स चायं निरुक्तसमासः कर्मधारयद्विगुतत्पुरुषाव्ययीभाव-बहुव्रीहिद्वन्द्वभेदात् षड्विधः यस्य कुम्भकारादिरुपपदसंज्ञकः समासोऽस्ति तेन सप्त समासः सप्तविधः। सङ्घाशनिभनौकाशा-दीनामिव कारादीनामपि शब्दानामुपपदार्थान्वितस्यैव स्वार्थस्य बोधकतया तथाविधनामान्तत्वमेव चैतस्य समासान्तराद्विशेषः

ननु यदि षड्विधः सप्तविधो वा समासस्तदास्य पञ्चविधत्वोक्तिः प्राचामसङ्गतेत्यतस्तामुपपादयति।

पूर्वमध्यान्तसर्वान्यपदप्राधान्यतः पुनः।
प्राच्यैः पञ्चविधः प्रोक्तः समासो वामटादिभिः॥

कश्चित्समासः पूर्वपदार्थधर्मिकान्वयबोधजनकतया पूर्वपदप्रधान उच्यते यथा प्राप्तजायार्द्धपिप्पलीपूर्वकायादिकस्तत्पुरुषः यथा वा उपकुम्भाद्यव्ययीभावः पुरुषसिंहादि कर्मधारयश्च। कश्चिन्मध्यपदार्थधर्मिकधीजनकतयैव मध्यपदप्रधानो यथा पटानधिकरणप्रतियोगितानवच्छेदकेत्यादिकस्तत्पुरुषः पटस्य नाधिकरणमित्यादिविग्रहे मध्यपदार्थस्यैव विशेष्यत्वात् बहुपदे बहुव्रीहिरेवेत्यस्य तत्पुरुषादेर्बहुनामगर्भत्वाभावे तात्पर्य्यमित्यग्रे व्युत्पाद्यत्वात्। कश्चिदन्यपदार्थधर्मिकधीहेतुत्वादन्यपदप्रधानः यथा राजपुरुषादिकस्तत्पुरुषो नीलोत्पलादिकः कर्मधारयो द्विगार्ग्याद्यव्ययीभावश्च। कश्चित्सर्वपदार्थधर्मिकबुद्धिहेतुत्वात् सर्वपदप्रधानः यथेतरेतरद्वन्द्वो द्वन्द्वमात्रं वा। कश्चित्स्वघटकान्यपदार्थधर्मिकज्ञानजनकत्वादन्यपदार्थप्रधानः यथा बहुव्रीहिः खलेयवाद्यव्ययीभावश्च। तदेवं पञ्चभेदानादायैव पञ्चविधत्वं प्राच्यैरुक्तमतो न विरोधः। नित्यानित्यभेदेन समासस्य द्वैविध्यमप्यस्ति यदुक्तं जयादित्येन विभक्तिमात्रप्रक्षेपान्निजान्तर्गतनामसु। स्वार्थस्यावोधबोधाभ्यां नित्यानित्यौ समासकाविति। स्वान्तर्गतनामसु विभक्तिमात्रप्रक्षेपेण यल्लभ्यार्थस्याबोधः स नित्यः समासः यथा कृष्णसर्पनिर्मक्षिकासुरादिः कृष्णः सर्पो मक्षिकाया निः न सुर इत्यादितस्तल्लभ्यस्य वैजात्यादेरग्रहात् यल्लभ्यस्य च बोधः सोऽनित्यो यथा राजपुरुषपूर्वकायादिः तल्लभ्यार्थस्य राज्ञः पुरुषः पूर्वं कायस्येत्यादिवाक्यादपि प्रतीतेः। स्फरद्वाणो चलच्चैत्र इत्या-

दिकः कर्मधारयोऽप्यनित्य एव समासः स्फुरन्तौ वाणे
त्यादिविग्रहस्य वाण्यादौ स्फुरदादिविधेयकबोधाजनकत्वे
स्फुरदभिन्नशाण्यादावैकत्वादिबोधकत्वमादायैव तदर्थप्रका
कत्वात् स्फुरन्तीं वाणीमित्यादिवाक्यस्यैव तत्र विग्रह
सम्भवाच्च विग्रह एव समासलभ्यार्थस्य बोधकत्वं तत्त्वं न
समासे विग्रहार्थस्य विग्रहलभ्ययोर्लिङ्गसंख्ययोर्व्यञ्जकवैधुर्ये
प्रायशः समासाबोध्यत्वात्। अतएव यत्र समासे तयोर्व्यञ्ज
सद्भावस्तत्रावगमोऽपि यथा जरतीचित्रगुर्जनः प्रियति
पुरुष इत्यादौ स्त्रीत्वस्य स्त्रीप्रत्ययतिस्रादिशब्दयोस्तदभिव्यञ्जकयो
सत्त्वात् यथा वा अक्षपरि शलाकापरि प्रिययुवा हस्त्यश्व
मित्यादावेकत्वादिः अक्षशलाकयोरेकत्व एवाव्ययीभाव
युष्मदस्मदोर्द्वित्व एव युवाद्यादेशस्य सेनाङ्गानां बहुत्व ए
समाहारद्वन्द्वस्य विधानात्। तदुक्तमभियुक्तैः सङ्ख्या
व्यञ्जकाभावादव्यक्ता प्रातरादिवत्। यत्र तु व्यञ्जकं किं
तत्र सङ्ख्या प्रकाशते शलकापरि हस्त्यश्वं पूर्वकायोऽर्द्धपि
लीति। पूर्वादेरर्द्धस्य च ङसर्थैकत्वमन्तर्भाव्यैवावयवि
तत्पुरुषस्य व्युत्पन्नत्वात् सरसिजादौ कण्ठे कालादौ चालु
समासे सुपः संख्यावगमेऽपि न क्षतिः तत्र व्यञ्जकसुपः सत्त्वे
ऽपि संख्या न बुध्यत इति तु समासशक्तिवादिनः पातञ्जलाः।

समासेषु कर्मधारयं लक्षयति।

क्रमिकं यन्नामयुगमेकार्थेऽन्यार्थबोधकम्।
तादात्म्येन भवेदेष समासः कर्मधारयः॥

क्रमिकं यन्नामद्वयं तयोरेकस्य नाम्नोऽर्थे धर्मिणि ताद
त्म्येनापरनाम्नोऽर्थस्यान्वयबोधं प्रति समर्थं तादृशनामद्व
कर्मधारयः नीलोत्पलमित्यादावुत्पलादिपदस्यार्थे नीलादि
पदार्थस्य तादात्म्येनान्वयः तथा पुरुषसिंह इत्यादावपि

पुरुषादावुत्तरपदलक्षणस्य सिंहादिसदृशस्य पुरुषः सिंह इवेत्यादिविग्रहे प्रायेणोपमेयस्योपमानैरिति कर्मधारयानुशासनात्। कुम्भस्य समीपमित्याद्यर्थक स्तूपकुम्भादिर्न तादात्म्येनान्वयबोधकः प्रबलमपद्रव्यमित्यादेः संग्रहाय नामपदस्य धातुभिन्नोपलक्षकत्वात् सार्थकसामान्यपरत्वेऽपि क्षत्यभावाच्च। नीलमुत्पलमित्यादौ तु समानविभक्तिकं नामद्वयं स्वार्थयोरभेदान्वयं बोधयदपि न क्रमिकं विभक्त्या व्यवधानात्। यदि च तादात्म्येन नीलादिनामार्थस्यान्वयबुद्धौ नीलादिनामोत्तरनामोपस्थाप्यत्वं तन्त्रमतो न तत्राभेदसम्बन्धेन नीलादेरन्वयः परन्तु विशेषणविभक्त्युपस्थापिते तादात्म्य एवाधेयत्वेन नीलघटपटावित्यादौ च नीलपदाव्यवहितेन घटपटेत्येवं द्वन्द्वात्मकनाम्नैवोपस्थापिते पटे नीलस्य तादात्म्येनान्वयान्न व्यभिचारः स्तोकं पचति धान्येन धनं प्रकृत्या पटुरित्यादावपि स्तोकादेर्न धात्वाद्यर्थे तादात्म्येनान्वयः किन्तु द्वितीयाद्यर्थे तादात्म्य एवाधेयत्वेनेत्यादिकं विभाव्यते तदा क्रमिकत्वमनुपादेयमेव। राजपुरुष इत्यादिकस्तु तत्पुरुषो न पुरुषे पूर्वपदलक्षितराजसम्बन्धिनस्तादात्म्येनान्वयबोधकः समासविग्रहयोस्तुल्यार्थकत्वहान्यापत्तेः परन्तु राजसम्बन्धस्यैव अतएव राजपुरुष इत्यादौ पूर्वपदे षष्ठ्यर्थसम्बन्धे लक्षणेति मणिकृदुक्तमपि सङ्गच्छते। यथा च नामार्थयोर्भेदेनान्वयेऽपि न क्षतिस्तथोपरिष्टाद्वक्ष्यते। किञ्चिद्विशिष्टसुबर्थानवच्छिन्नस्यैव वा तादात्म्येनान्वयबोधकत्वमुक्तनिरुक्तौ निवेश्यम्। न चैवमपि पञ्चपुत्र्यादिद्विगौ द्विगार्ग्यं गच्छत इत्यादिस्थलीये द्वितयाद्यभिन्नगार्ग्यादिबोधकाव्ययीभावे चातिव्याप्तिस्तदन्यत्वेनापि विशेषणीयत्वात्। अत्र च मानुषब्राह्मणो ब्राह्मणमानुष इत्याद्यप्रयोगाद्विशेषणविशेष्ययोर्यत्र मिथस्तादात्म्येन व्यभिचार-

स्त्वेव कर्मधारयः साधुः प्रमेयधूम इत्यादौ तु. नरस्य गर्भो राज्ञः शिर इत्यादाविव तादात्म्यसम्बन्धार्थकषष्ठ्या तत्पुरुष एवेति वृद्धाः । चन्दनतरुर्दिव्यगिरिवर्मन्तसमय इत्यादि प्रयोगस्य प्रामाणिकत्वात् विशेष्यस्यैव विशेषणव्यभिचारित्वं कर्मधारये तन्त्रं न तु विशेषणस्यापि तद्व्यभिचारित्वं पुरुषो- त्तम इत्यत्र चोत्तमत्वं नित्यज्ञानादिमत्त्वं किन्तु श्रमविशि- त्वम् अतएव तत्र पुरुषस्यैव पुरुषेऽपि तस्य व्यभिचारसत्त्वात् त्तमपुरुष इत्यपि कर्मधारयः साधुरिति तु नव्याः । तदायुक्त- पदेन: कर्मधारयः प्रायशो नेष्यते नीलतदस्तीत्यादितो जातौ नीलोत्पलादेरस्तित्वाद्यप्रतीतेः । पक्वयज्ञोजनं रम्यमामतज्ञ ज्ञानं वृथा । नालयद्रुम आस्वाद्यः कटुतद्रूपमोच्यते इत्यादि प्रयोगात् क्वचिदिष्यतेऽपि प्रयुक्तञ्च जुमरनन्दिना परमः । इत्याद्यर्थे परमसः परमतावित्यादि । तत्पुरुषोऽप्येतैः व्याख्यातः । ननु विशेष्यतया नामार्थप्रकारकान्वयबुद्धिमा- प्रत्येव नामोत्तरविभक्त्युपस्थाप्यत्वं तन्त्रं न तु तादात्म्यसम्- न्धानवच्छिन्नतत्प्रकारताकबुद्धिं प्रति गौरवादतो नामार्थयो नीलोत्पलयोरन्वयासम्भवात् कर्मधारयादिकः समासो यौगिकः किन्तु नीलोत्पलत्वादिविशिष्टे रूढ एव । तदुक्तं भर्तृहरिणा अबुधान् प्रत्युपायाश्च विहिताः प्रतिपत्तये । शब्दा- न्तरत्वादत्यन्तं भेदो वाक्यसमासयो रिति वैयाकरणाः तन्मते नीलोत्पलमित्यादौ समुदाये रूढ्यप्रतिसन्धानेऽपि नीलादि- प्रत्येकपदोपस्थित्या तयोस्तादात्म्ये नान्वयबोधस्यानुभविकत्वे गौरवस्य प्रामाणिकत्वाद्यन्यथा नामार्थस्यान्वयबोधसामान्यं प्रत्येव नाम्नोत्तरनाम्नोपस्थाप्यत्वं तन्त्रमुरीकृत्य नीलमानयेत्यादौ नामार्थसुबर्थयोर्नान्वयबोधः परन्तु सुबन्तभागस्य नीलविशिष्ट- कर्मत्वादौ रूढिरेवेत्यपि किन्न रोचयेः । न च समासस्य

शक्तत्वे नीलोद्रव्यञ्च घट इत्यादाविव नीलघटो द्रव्यमित्यादावपि घटे धर्मिण्येकत्र द्वयमिति न्यायेन नीलद्रव्ययोस्तादात्म्येनान्वयप्रसक्तिरिति वाच्यं नामार्थस्य मुख्यविशेष्यताक इव तादात्म्यावच्छिन्नविधेयताकेऽपि बोधे नाम्नः प्रथमान्तत्वस्य तन्त्रत्वात् विधेयत्वन्तु विषयतावच्छेदकतान्यप्रकारत्वं प्रकारताप्रभेदो वेत्यन्यदेतत् पटमित्यादौ तु कर्मत्वादौ पटादिर्न तादात्म्येन विधेय इति न तत्र व्यभिचारः। ननु नीलं पीतञ्चोत्पलं यत्र इत्यर्थं नीलपीतोत्पलं सर इत्यादिको बहुव्रीहिरिव नीलं पीतञ्चोत्पलमित्यर्थं नीलपीतोत्पलं पुष्पमित्यादिकः कर्मधारयोऽप्येकत्र द्वयमिति न्यायेन नीलपीताभ्यामवच्छिन्नोत्पलनिष्ठनमिताबोधजनकः कथं न स्यात् इति चेन्न बहुपदे बहुव्रीहिरिव नेतरो द्वन्द्वान्यः समास इत्यनुशिष्टिबलेन बहुव्रीहेरेव स्वनिविष्टनामद्वयाप्रस्थाप्यार्थद्वयावच्छिन्नताद्वशनामान्तरार्थनिष्ठविषयताकबोधं प्रति हेतुत्वेन समासान्तरस्य तादृशधियं प्रत्यसमर्थत्वात्। नीलपीतोत्पले रम्ये पीतनीलोत्पलाश्रितमित्यादौ तु नीलोत्पलं पीतोत्पलञ्च रम्यमित्याकारक एव बोधो न तु नीलं पीतञ्च यदुत्पलं तद्रम्यमित्याकारः। अतएव द्वन्द्वात् परस्य प्रत्येकाभिसम्बन्धसूचनार्थं नीलपीते च ते उत्पले चेत्यादिकमेव तत्र विग्रहं वर्णयन्ति न तु नीलं पीतञ्च तदुत्पलञ्चेत्यादिकम्। घटस्य नाधिकरणमित्यादिविग्रहे घटानधिकरणमित्यादिकस्तु मध्यपदप्रधानस्तत्पुरुषो न बहुनामगर्भो नवैकत्र द्वयमितिन्यायेन स्वार्थस्य बोधक इति सम्प्रदायविदः।

स्यादेतत् समासानां समुदायशक्तत्वे वाचस्पतिमिताया: स श्यामे कण्ठे व्रषः पुमान् इत्यादौ वाचि मितायाः कण्ठे च श्यामादेर्नाभेदेनान्वयो वागादेः पदार्थैकदेशत्वेन तत्र पदान्त-

रार्थस्य पशुरपशुर्गगनं समवेतमित्यादाविव निराकाङ्क्षत्वा
पत्नग्रा द्विजातिस्वाध्यायो जटाभिस्तापसस्तृहित्यादौ पत्नाभा
भावस्य द्विजातौ जटावैशिष्ट्यस्य च तापसे भेदेनापि नान्व
यथाकाशमभिघातादित्यादौ। यौगिकत्वे तु तत्र तत्र त
विधान्वयो दुर्वारो वाक्प्रभृतिः पदार्थत्वादिति चेन्न वृत्त्येक
पदस्यार्थसम्बन्धस्य कारकस्य वा बोधकान्यविभक्तेः स्वार्था
भावकतायां निराकाङ्क्षत्वादेव तस्य निरस्तत्वादतएव चैव
गुरुकुलं शरैः शातितपत्नक इत्यादौ गुर्वादिपदस्य वृत्त्येकदे
त्वेऽपि तदर्थे षष्ठार्थसम्बन्धस्य तृतीयार्थकरणत्वादेश्चान्व
सर्वसिद्धः। समासस्येव क्यजादिप्रत्ययान्तस्यापि वृत्तित्वा
परिष्कृतायाः मततं यस्तु वाचस्पतीयते। सम्पदा जट
वापि पुत्रीयति स पुरुष इत्यादेरपि वागाद्यंशे परिष्कृता
पुत्राद्यंशे च सम्पदादेः सद्भावादिबोधकतायां न सामर्थ्यम
एत्र प्रतियोगिपदादन्यद्यदन्यत् कारकादपि। वृत्तिशब्दै
देशार्थे न तस्यान्वय इष्यत इत्यपि पठन्ति कर्म चाण्डालयोगो
कुरु पापक्षयं ममेत्यत्र च योगोत्थमित्यस्य योगप्रयोज्यमित्य
स चाभेदेन पापक्षयेऽन्वितः। यस्मिन् राशिगते सूर्य्ये विपत्
यान्ति मानवाः। तेषां तत्रैव कर्त्तव्या पिण्डदानादिका
क्रियेति वचनन्तु असूनं समूलत्वे तु यस्मिन् राशौ गते सूर्य
इत्येव तत्र पाठ इत्यास्तां विस्तरः।

द्विगुं लक्षयति।

संख्याशब्दयुतं नाम तदलक्ष्यार्थबोधकम्।
अभेदेनैव यत्स्वार्थे स द्विगुस्त्रिविधोमतः॥

संख्यावच्छिन्नशक्तायत्पदोत्तरत्वविशिष्टं यन्नाम स्वार्थ
धर्मिकं तादात्म्येन तदलक्ष्यार्थस्यान्वयबोधं प्रति समर्थ
तन्नामोत्तरतापन्नं तन्नामैव तदलक्ष्यार्थाभिन्नस्वार्थे द्विगुरुच्यते।

त्रिकटु त्रिभुवन चतुर्युग चतुर्वर्ग पञ्चगव्य पञ्चामृत षड्रस षट्-पदार्थ सप्तर्षि अष्टनाग अष्टवसु नवरस नवग्रह दशमूल एका-दशरुद्र एकादशेन्द्रिय द्वादशादित्यादिकस्तु कर्मधारयः शुण्ठ्यादिपर्य्याप्तत्रित्वावच्छिन्नबोधकतया न पूर्वपदाल्लक्षणार्थस्य बोधकस्त्रिकटुप्रभृतिभ्यः कटुत्रयादिसामान्यस्याप्रतीतेः पञ्च-मूलीत्यादौ तु मूलपञ्चकत्वेनैव मूलविशेषेषु तात्पर्य्यं नतु विशेषरूपेणापि अतएव कण्टकार्य्यादिकं स्वल्पं शाल्पार्य्यादि च यन्महत्। पञ्चमूलं तदुभयं दशमूलमुदाहृतमित्यादिक-स्तादृप्येण बाधस्थलीयः प्रयोगः वर्षाकाले मघर्क्षेण युक्ता चापि त्रयदशात्यादिवदेकवचनस्य साधुत्वसम्भवात् द्वयो रूप-मित्याद्यर्थे द्विरूपादिपदं नाभेदेन द्विप्रभृतेरनुभावकम् एकत्व-संख्यया विशिष्टं बोधयदपि एकपदं न पर्य्याप्तिसंसर्गेण तद-वच्छिन्नस्य बोधकं द्वितयादिपदं पर्य्याप्त्या द्वित्वावच्छिन्नं प्रतिपादयदपि न तत्र शक्तं वाक्यत्वादतो नैकघटाद्वितयपटे-त्यादिकर्मधारयेऽतिप्रसङ्गः। सप्तशतीं पठ्यतामित्यादौ च यद्यपि शते धर्म्मिणि सप्तानामभेदेन नान्वयो बाधितत्वान्नापि सप्तपदलक्षितस्य सप्तगुणितस्य द्विगुत्वहान्यापत्तेः तथापि शतपदार्थैकदेशे शतत्वसंख्यायां तस्याः सप्तत्वसम्भवादिति वदन्ति। द्विगार्य्यं गच्छत इत्याद्यव्ययीभाववारणन्तु पूर्ववत्। स चायं द्विगुस्त्रिविधः तद्धितार्थोत्तरपदसमाहारभेदात्।

तत्र तद्धितार्थं द्विगुं लक्षयति।

तद्धितार्थान्वितस्वार्थस्तद्धितार्थद्विगुर्मतः।
तद्धितार्थे लाक्षणिकस्त्वन्यनामा त्वसर्वगः॥

यो द्विगुः स्वोत्तरतद्धितार्थान्वितस्वार्थकः स तद्धितार्थद्विगुः। द्विमुद्रो वृष इत्यादौ द्वाभ्यां मुद्राभ्यां क्रीतस्य द्विवर्षा गौरि-त्यादौ द्वाभ्यां वर्षाभ्यामभिन्नवयस्कस्य द्विदलं पवित्रमित्यादौ

द्वाभ्यां दलाभ्यां निर्मितस्य द्विगुञ्जं स्वर्णमित्यादौ
गुञ्जाभ्यां तुलितस्य त्रिकाण्डः पुरुष इत्यादौ त्रिभिः
परिमितस्य पञ्चकपालश्चरुरित्यादौ पञ्चभिः कपालैः संस्
बोधने लुप्तस्यैव ठगादितद्धितस्य क्रीताद्यभिधायकत्वात्
शिष्टकृतां मतेनेदम् । उक्तप्रयोगेषु द्विगोरन्तिमनाम्नैव
दिरूपार्थो लक्ष्यते न तु लुप्तष्ठगादिरप्यपेक्ष्यतेऽतस्तद्धि
लाक्षणिकस्वान्त्यनामको द्विगुरेव तद्धितार्थद्विगुरिति
भाष्यमतन्तु न युक्तम् असर्वंगत्वात् पाञ्चपुरुषिरित
पञ्चानां पुरुषाणामपत्यस्य पञ्चगर्ग्यरूप्यो गौरित्यादौ पञ्च
गर्गाणां भूतपूर्वस्य बोधने तद्धितेनैव स्वार्थस्यापत्यप्रभृते
स्थापनात् द्विस्वर्णमुद्रः पशुरित्यादावुत्तरपदस्य शक्तिविर
क्रीताद्यर्थे लाक्षणिकत्वायोगाच्च ।

उत्तरपदद्विगुं लक्षयति ।

स्वान्तर्निविष्टशब्दाभ्यां शब्दान्तरसमासगः ।
यो द्विगुः शाब्दिकैरुक्तः स उत्तरपदद्विगुः ॥

यो द्विगुः स्वघटकनामभ्यां सह साकाङ्क्षनामान्त
समासस्यान्तर्गतः स उत्तरपदद्विगुः यथा पञ्च गावो धनम
त्यादिविग्रहे पञ्चगवधनः पुरुष इत्यादौ बहुव्रीह्यादिनि
पञ्चगवादिः ।

समाहारद्विगुं लक्षयति ।

स्वार्थान्वितसमाहारलक्षकस्वान्त्यशब्दकः ।
उक्ताभ्यामितरः किं वा समाहारद्विगुर्द्विगुः ॥

स्वोपस्थाप्यार्थस्य समाहारलक्षको यदीयान्त्यशब्दः स द्वि
समाहारद्विगुः पञ्चपुलीत्यत्र हि योगलभ्यानां पञ्चाभिन्नपुल
समाहारः परस्थपुलशब्देन लक्ष्यते न तु तत्र द्विगोः शक्तिर
लभ्ये शक्त्यायोगात् अतएव न लक्षणापि शक्यसम्बन्धस्यैव लक्ष

त्वेन वाक्ये तदसम्भवात्। यदि च पञ्चपूलीत्यतः पञ्चानां पूलानामिव बोधो न तु तत्समाहारस्यापि अतएव पञ्चपूलीं छिनत्ति इत्यादिकः प्रयोगः प्रमाणम् अन्यथा समूहात्मनः समाहारस्य छिदाद्यसम्भवेन तदयोग्यत्वापत्तेः पूलादेर्हि त्वबहुत्वेऽप्येकवचनन्त्वानुशासनिकं दारादेर्बहुवचनवदुपपद्यते। न च द्रव्यप्राधान्ये पञ्चखट्वीत्यादौ ह्रस्वो न स्यात् गोशब्दस्येव स्त्रीप्रत्ययस्यापि समासान्त्यस्योपसर्जनस्यैव तद्विधानादिति वाच्यं समाहार संज्ञकद्विगोरप्यन्त्यस्य स्त्रीप्रत्ययस्य पृथगेव ह्रस्वविधेर्वक्तव्यत्वात् प्रयोगानुसारित्वात् कल्पनायाः पञ्चपाचकीत्यादावव्याप्तिश्च तत्रोत्तरपदस्य वाक्यत्वेन लक्षकत्वायोगादिति सूक्ष्ममीक्षते तदा पूर्वनिरुक्ताभ्यां तद्धितार्थोत्तरपदद्विगुभ्यां भिन्नद्विगुरेव समाहारद्विगुर्बोध्यः। एवञ्च द्विगोः कर्मधारयान्तर्गतत्वेऽपि न क्षतिरिति तु विभावनीयम्।

तत्पुरुषं लक्षयति।

यदीयेन सुबर्थेन युतयत् बोधनक्षमः।
यः समासस्तस्य तत्र स तत्पुरुष उच्यते।

यदर्थगतेन सुबर्थेन विशिष्टस्य यदर्थस्यान्वयबोधं प्रति यः समासः स्वरूपयोग्यः स तदर्थस्य तदर्थे तत्पुरुषः न तु यन्नामोत्तरं यन्नाम यदर्थगतसुबर्थावच्छिन्नस्य यत्स्वार्थस्य बोधकं तदुत्तरं तन्नामैव तदर्थयोस्तत्पुरुषः पूर्वकायोऽर्द्धपिप्पलीत्यादावव्याप्तेः। स्तोकपक्त्रीत्यादौ क्रियाविशेषणैः कर्मधारय एव महाकविसंहाविञ्च इत्यादौ कवित्वादाविव प्रकृतेऽप्येकनामार्थैकदेशे पचनादावपरनामार्थस्याभेदान्वयबोधकतया तथात्वसम्भवात् स्तोकं पक्त्रीत्यादौ अमस्तादात्म्यवाचित्वे तु तत्पुरुषः सम्भवत्येव क्रियाविशेषणैः समास एवाव्युत्पन्न इति तु न देश्यं स्तोकनम्रा स्तनाभ्यामित्यादेः कालिदासाद्यैः

प्रयुक्तत्वात् द्विगौ कर्मधारये च शाब्दिकानां तत्पुरुषत्वक
देशः पदसंस्कारार्थी गौणः।

विभजते।

द्वितीयादिसुबर्थस्य भेदादेष च षड्विधः।
क्रियान्वयी द्वितीयादेरर्थः प्रायोऽत्र योजितः॥

ग्रामगतः चैत्रनीतः ब्राह्मणदत्तः वृक्षपतितः चैत्रधनं मै
गतिः खड्गखित इत्यादौ द्वितीयादिसुबर्थस्य कर्मत्वकर्तृत
देर्वीभेदादेतस्य द्वितीयातृतीयादितत्पुरुषत्वेन षड्भेद
स्वघटकैकपदार्थनिष्ठद्वितीयार्थावच्छिन्नापरपदार्थबोधकसमा
देर्धर्मषट्कस्य सुवचत्वात्। इयांस्तु विशेषो यदेतेषु धा
र्थान्वय्येव द्वितीयादेरर्थः प्रायो घटकः पीठं परितः पुष्
सुखं ग्रामाय विद्या दण्डाहतः गवां क्षणा सम्पन्नचोरा ति
तैलमित्यादिविग्रहे तत्पुरुषस्यासाधुत्वात् वर्षसुखो क्रोष्टका
कुण्डलहिरण्यं घटान्यः कुबेरबलिः कर्मकुशल इत्यादौ
तत्तद्विशेषविधेर्द्वितीयादितत्पुरुषः।

ननु ग्राम गत इत्यत्र गतौ ग्रामकर्मत्वस्य राजपुरुष इत्य
च पुरुषे राजसम्बन्धस्यावगमो न ग्रामादिपदेभ्यो लुप्तसु
स्मरणात् तल्लोपमजानतोऽप्यन्वयबोधात् समृद्धं ग्रामगत इत्य
दितः समृद्धग्रामयोरभेदान्वयधीप्रसङ्गाच्च सम्पन्नं दधि पश्
त्यादाविव तत्रापि नामार्थयोरभेदान्वयबोधोपयुक्तस्य नाम
समानविभक्तिप्रतिसन्धानस्याविशिष्टत्वात् नापि ग्रामादिपद
ग्रामकर्मत्वादिवाचकत्वात् अभेदान्यसम्बन्धेन नामार्थस्यान्व
बोधं प्रत्यनुकूलस्य नामोत्तरविभक्त्युपस्थाप्यत्वस्य ताद
प्रत्ययोपस्थाप्यत्वस्य वा गत्यादावसत्त्वात्। न च ग्रामादि
पदलक्षितस्य ग्रामकर्मकादेरेव तत्र गत्यादौ तादात्म्येनान्व
इति साम्प्रदायिकानां मतमेव साम्प्रतं तत्पुरुषाख्यापि समस

मानपदार्थयोरभेदान्वयबोधकत्वे कर्मधारयत्वापत्तेः ग्रामं गतः राज्ञः पुरुष इत्यादिविग्रहस्य समासतुल्यार्थकत्वहान्यापत्तेश्चेति चेन्न प्रत्ययान्ततत्तन्नामार्थस्यैव भेदेनान्वयबोधं प्रति तत्तन्नामोत्तरप्रत्ययोपस्थाप्यतायास्तन्त्रत्वेन ग्रामगत इत्यादौ ग्रामादिपदलक्षितग्रामकर्मत्वादेर्गत्यादौ भेदेनान्वये बाधकाभावात्। नचैवं गतो ग्रामित्यत्रापि ग्रामपदलक्षितस्य ग्रामकर्मत्वादेर्गत्यादौ भेदेनान्वयबोधप्रसङ्गः प्रत्ययान्तान्यतत्तन्नामोपस्थाप्यार्थस्यान्वयबोधसामान्यं प्रत्येवोत्सर्गतस्तादृशतत्तन्नामोत्तरनामोपस्थाप्यत्वस्य हेतुत्वेन तदसम्भवात्। अत एवार्द्धपिप्पलीच्छेद इत्यादौ पूर्वपदप्रधानत्वेनानुशिष्टस्य तत्पुरुषादेरन्यपदार्थानां पिप्पलीप्रभृतीनां अर्द्धाद्यर्थे घटपटमठानामित्यादौ च सर्वपदप्रधानत्वेन द्वन्द्वस्यानन्यपदार्थानां घटादीनां सुबर्थे अन्वयः तथा बहुगुड़द्राक्षेत्यादौ गुड़ादीनामपि बहुजर्थे प्रकृत्यर्थस्येषदसमाप्तौ नाम्नः प्राग्बहुचो विधानादिति।

ननु यदि नामार्थयोरपि भेदेनान्वयो व्युत्पन्नस्तर्हि ग्रामगत इत्यादौ कर्मत्वादिसंसर्गेण ग्रामादेरेव गत्यादावन्वयोऽस्तु कृतं ग्रामादिशब्दस्य ग्रामकर्मत्वादिलक्षणयेति चेत्, सत्यं विग्रहवाक्यानां समाससमानार्थकत्वरक्षणाय तत्र लक्षणास्वीकारात् मास्तु वा ग्रामादिपदस्य तत्कर्मत्वादौ लक्षणा कर्मत्वादिसंसर्गेणैव ग्रामादेर्गत्यादावन्वयसम्भवात्तथापि न क्षतिः ग्रामं गत इत्यादिविग्रहस्यापि कर्मत्वार्थकद्वितीयाद्यपसन्धानवशादेव कर्मत्वादिसंसर्गेण गत्यादौ ग्रामाद्यन्वयबोधकतया समाससमानार्थकत्वसम्भवात् ग्राममित्यादौ कर्मत्वादिधर्मिकान्वयबोधानुरोधेन द्वितीयादेः कर्मत्वाद्यर्थकत्वात् अतएवाघटः पट इत्यादावन्यस्य असुरो दैत्य इत्यादौ विरोधिनः अनिक्षुः शर इत्यादौ सदृशस्य अब्राह्मणो वार्द्धषिक इत्या-

दावपक्षष्टस्य अमुदरमुदरन्तरुणा इत्यादौ खल्पस्य वा
केन नञ्निपातेन स्वार्थे प्रतियोगित्वादिसम्बन्धेनैव घटादे
भावनेऽपि तत्रत्य तत्पुरुषे नाव्याप्तिः। पटस्याभाव इ
प्रसज्यनञा अव्ययीभाव एव समासः प्रमाणन्तेनापट वा
इत्याद्येव तत्र प्रयोगस्तत्पुरुषस्योत्तरपदलिङ्गकत्वनिय
इति वृद्धाः। प्रसज्यनञाप्यपट इत्यादिस्तत्पुरुषएव स
र्नाव्ययीभावः नञ्तत्पुरुषविधेस्तदपवादकत्वात् अत
वादिनामविवाद इत्यादिकः किरणावल्यादौ पुंसि प्रयोग
तु पक्षधरमिश्राः। युज्यते चोत्तरः कल्पो नचेदेवं दा
राजमातङ्गास्तस्यैवामी तुरङ्गमाः। चैत्रो ग्रामगतस्तत्र
किं कुरुतेऽधुना। इत्यादौ राजसम्बन्धादे राजादिपदलक्ष
तदेकदेशस्य राजादेस्तदा परामर्शो न स्यात् विशेष्यवि
वृत्त्या पूर्वोपस्थापितस्यैवार्थस्य परामर्शकत्वात् तदादिशब्द
न हि प्रभावतीयं मे त्वं तस्मै देहि कम्बलम्। नोक्तो सं
गुणः सोऽत्र भ्रात्रादिर्बोध्यते तदा।

नन्वेवमनयैव ऋचा निषादस्थपतिं याजयेदिति श्रुतौ नि
दानां स्थपतिरिति व्युत्पत्त्या न तत्पुरुषः परन्तु निषादः स्थप
रित्यर्थे कर्मधारय एवेति सिद्धान्तो व्याहन्येत तत्पुरुषे भक्तिर्हि
हि तत्र कर्मधारयस्वीकारस्तन्मूलके निषादस्याधानेऽपूर्वविद
प्रयुक्तिश्च कल्पते कल्पते च निषादीयतत्तदध्ययने निषेधवि
बाधात् स्त्रीशूद्रौ नाधीयेतामिति श्रुतौ तत्तदध्ययनेतराध्य
परत्वं धातोः शूद्रपदस्य त्रैवर्णिकान्योपलक्षकत्वात्। यदि
कर्मधारय इव तत्पुरुषेऽपि न लक्षणा तदा तत्पुरुष एव ता
चितस्त्रैवर्णिकस्यैव निषादीयस्थपतित्वेन प्राप्तावपूर्वविद्याप्र
स्तन्मूलकनिषेधविधिसङ्कोचस्य चाकल्पत्वादिति चेत् त
पुरुषे लक्षणापक्षेऽपि किमिति कर्मधारय एव तत्राग्रह

न तु तत्पुरुषः निषादानां स्थपतिरिति व्युत्पत्त्या निषादस्थपतिपदान्निशादसम्बन्धवत्त्वेन स्थपत्यनुभवमहस्रस्य सर्वसिद्धत्वेन तदनुरोधाल्लक्षणायाः क्लृप्तत्वेन तत्कल्पनाभयस्यासम्भवात् न हि निषादस्थपत्यादिपदं निषादादिसम्बन्धवत्तया स्थपत्यादिबोधने निराकाङ्क्षं तथा सति निराकाङ्क्षत्वादेव तत्पुरुषत्वासम्भवेन लक्षणापत्तेस्तद्बाधकतयोपन्यासानौचित्यात् । अथ बाधकं विना मुख्यार्थ एव श्रुतीनां प्रामाण्यं न तु प्रमाणान्तरविषयेऽपि लक्ष्यार्थे मुख्ये शब्दस्वरस इत्यादिमीमांसया तथैव सम्प्रतिपत्तेरिति चेत्तर्हि बाधकासत्त्वे कर्मधारयविधयैव वेदानां प्रामाण्यं न तु प्रमाणान्तरविषयेऽपि तत्पुरुषविधया कर्मधारयात् समासान्तरस्य दौर्बल्यमित्यादिमीमांसया तथैव प्रतिपत्तेरित्यपि किन्न रोचयेः । तत्पुरुषाद्बहुव्रीहेर्जघन्यत्वमित्यत्राप्युक्तैव रीतिरनुसर्त्तव्या न हि बहुव्रीहौ समस्तपदानां लाक्षणिकत्वादेव ततो दुर्बलत्वम् एकपदमात्रलक्षणयापि बहुव्रीहेर्व्याख्यात्वात् इति आस्तां विस्तरः ।

अव्ययीभावं लक्षयति ।

उत्तरार्थान्वितस्वार्थाव्ययपूर्वस्तु यो भवेत् ।
समासः सोऽव्ययीभावः स्त्रीपुंलिङ्गविवर्जितः ॥

यः समासः स्वोत्तरपदोपस्थाप्येन यदर्थेनान्वितस्य यदर्थस्य बोधकाव्ययपूर्वभागकः स तद्विशिष्टस्य तदर्थस्य बोधनेऽव्ययीभावः रूढ़े निर्मक्षिकम् उपकुम्भमित्यादौ हि मक्षिकाया अभावः कुम्भादेश्च सामीप्यादिर्मक्षिकादिपदप्राग्वर्त्तिना निराद्यव्ययेनानुभाव्यते अर्द्धशरीरमित्यादौ उत्तरपदार्थान्वितस्वार्थबोधकमप्यर्द्धपदं नाव्ययं निर्मक्षिका भूमिः निर्मनुष्यो देश इत्यादौ तु मक्षिकादेरभाववन्तं बोधयन्नपि निर्मक्षिकादिक-

स्तत्पुरुषो न तादृशार्थे स्त्रीपुंलिङ्गकार्यविधुर इति तत्र प्रसङ्गः।

नन्वक्षस्याक्षस्य शलाकाया वा च्युतेऽन्यथा पातनमित्यर्थेऽक्षपरि शलाकापरि इति अव्ययीभावेऽव्याप्तिस्तस्याव्ययगर्भत्वेऽपि तत्पूर्वकत्वाभावात् एवं द्वौ गार्ग्यौ इत्यर्थे द्विगार्ग्यं गच्छत इत्यादौ द्वाभ्यां दण्डाभ्यास् इत्यर्थे द्विदण्डि प्रहरतीत्यादौ तिसृणां यमुनानां समाहार इत्यर्थे त्रियमुनं स्नातीत्यादौ लोहिता गङ्गा यस्मिन्नित्यर्थे लोहितगङ्गं देश इत्यादौ दण्डेन मिथः प्रहृत्य वृत्तमित्यर्थे दण्डादण्डि रणमित्यादौ केशेषु मिथः प्रगृह्य वृत्तमित्याद्यर्थे केशाकेशि युद्धमित्यादौ खले यवा यदा संहृता यवा यदा तिष्ठन्ति गावो यदेत्याद्यर्थे खलेयवं संहृतयवं तिष्ठद्गु वा काल इत्यादौ द्विगार्ग्यद्विदण्ड्यादिष्वपि तेषु अव्ययगर्भत्वस्याप्यभावादतः प्रकारान्तरेण निर्वक्ति।

> अमादेशं विना श्रूयमाणषष्ठी न बोधिका।
> स्वार्थे यदर्थस्य यद्वा सोऽव्ययीभाव इष्यते॥

अमादेशं विना श्रूयमाणषष्ठी स्वार्थे यत्समासार्थस्यान्वयबोधं प्रत्यसमर्था स एव वाव्ययीभावः श्रूयमाणैव षष्ठी स्वार्थे समासान्तरार्थस्यान्वयबोधने समर्था न तु लुप्तापि क्षतयो रक्षपरिव्यर्थत्वमित्यादौ त्वव्ययीभावार्थस्य लुप्तापि क्षतयोरेकाचान्यथापातनयोर्निष्फलत्वमित्यन्वये लुप्तषष्ठ्यैव पातनस्य सम्बन्धप्रत्यायनात्। स्निग्धस्योपगङ्गं पावित्र्यमित्यादौ स्निग्धस्य गङ्गासमीपस्य पवित्रत्वमित्याद्यन्वये समीपादौ सम्बन्धः श्रुतयाप्यमादेशवशादेव षष्ठ्यानुभाव्यत इति न तत्रोपगङ्गाद्यव्ययीभावेऽव्याप्तिः अनुगङ्गेन सञ्चारः उपगङ्गे षु पूतत्वं सुपकुम्भादानीतमित्यादावमादेशं विनापि श्रूयमाणाभिन्न

तीयासप्तम्यादिसुब्भिरव्ययीभावार्थस्य करणत्वाधिकरणत्वादिकं बोध्यत इति षष्ठोपर्य्यन्तानुसरणम्।

बहुव्रीहिं लक्षयति।

बहुव्रीहिः स्वगर्भार्थसम्बन्धित्वेन बोधकः।
निरूढ़या लक्षणया स्वांशज्ञापकशब्दवान्॥

समास इति प्रकृतं तथाच स्वांशस्य निरूढ़लक्षणया ज्ञापकेन शब्देन घटितः स्वगर्भस्य यादृशार्थस्य सम्बन्धित्व-प्रकारेणान्वयबोधं प्रति समर्थः समासः स्वगर्भतादृशार्थ-सम्बन्धिबोधने बहुव्रीहिरित्यर्थः। आरूढ़वानरो वृक्ष इत्य-त्रारूढ़ो वानरो यमिति व्युत्पत्त्या स्वकर्मकारोहणकर्तृवानर-सम्बन्धित्वेन वृक्षपीतपयस्कं पात्रमित्यत्र पीतं पयो येन इति रीत्या स्वकरणकपानकर्मजलसम्बन्धित्वेन पात्रं पक्वतण्डुलश्चैत्र इत्यत्र पक्वस्तण्डुलो येनेति दिशा स्वकर्तृकपाककर्म तण्डुल-सम्बन्धित्वेन चैत्रं दत्तदक्षिणो द्विज इत्यत्र दत्ता दक्षिणा यस्मै इति क्रमेण स्वसम्प्रदानकदानकर्मदक्षिणासम्बन्धित्वेन द्विजं पतितपत्रस्तरुरित्यत्र पतितं पत्रं यस्मादिति विग्रहेण स्वापा-दानकपतनाश्रयपत्रसम्बन्धित्वेन तरुं चित्रगुरित्यत्र चित्रा गौर्यस्येति वाक्यानुसारेण चित्राभिन्नस्वगोसम्बन्धित्वेन चैत्रं रक्तपटः काय इत्यत्र रक्तः पटो यत्रेति व्युत्पत्त्या रक्ताभिन्न-स्ववृत्तिपटसम्बन्धित्वेन कायम् एवं वाणच्छिन्नकरो नर इत्या-दावपि वाणेन छिन्नः करो येन यस्य वा इत्यादि विग्रहे वाण-करणकस्वकर्तृकच्छिदाकर्मकरसम्बन्धित्वादिना नरादिकं बहु-व्रीहिर्बोधयतीति सर्वत्र स्वगर्भतत्तदर्थसम्बन्धित्वेन धर्मिणाम-वगमः। दक्षिणपूर्वा पूर्वोत्तरेत्यादिविदिग्बहुव्रीहिस्थले दक्षिणया पूर्वा यस्या इत्यादिविग्रहेण स्वपार्श्वस्थदक्षिणसहित-पूर्वसम्बन्धित्वादिना आग्नेयीप्रभृतीनां विदिशां बोधः। अस्ति-

चौरा नास्तिच्चौरा गौरित्यादावर्य्यास्ति चौरं यस्या इत्यादि
विग्रहेषास्तित्ववत्स्वचौरसम्बन्धित्वादिप्रकारेण गवादेरवग
इयांस्तु विशेषो यत्तत्रैकेषां मतेऽस्तीत्यादिकं तिङन्तम
तत्प्रतिरूपकाव्ययमिति। उप समीपे दश येषामिति सम
गणितत्वार्थकषष्ठ्या विग्रहादुपदशाः शकुनय इत्यादौ स्वसमी
गणितदशसम्बन्धित्वेन नवानामेकादशानाञ्च पक्षिणामवग
स्तत्र दशशब्दस्य दशत्वलक्षणया स्वपर्य्याप्तसंख्यासमीपगणि
दशत्वसम्बन्धित्वेनैव नवादेर्बोध इति दुर्गप्रभृतयः। अधि
दश येषामित्यादिविग्रहे अधिकदशाः पुरुषा इत्यादाव
स्वपर्य्याप्तसंख्याधिक दशवृत्तिसंख्यापर्य्याप्ताधिकरणदशसम्बन्धि
त्वेन नवादिपुंसां प्रत्ययः। द्वौ त्रयो वा येषां इत्यन्यतराथं
वाशब्देन विग्रहे द्वित्राः पवित्राः परमित्यादौ द्विचरन्यत
पर्य्याप्तस्वपर्य्याप्तसंख्यासम्बन्धित्वेन द्वयोस्त्रयाणां वा पवित्रा
बोधः पटे घटे वा घटत्वमित्याद्यनुरोधेन वाकारस्यान्यतरा
कताया व्युत्पाद्यत्वात् तस्य च वृत्तौ गतार्थत्वादश्रुतिः प
षड्वा येषामित्यादिविग्रहात् पञ्चषाः पुरुषा इत्यादावप्युक्तरीत्या
वान्वयो द्रष्टव्यः। परे तु द्वौ वा त्रयो वा येषामित्यादिविग्र
वाशब्दस्य संशयकोट्यर्थकतया द्वित्रा इत्यादि बहुव्री
स्वधर्मिकसंशयकोटितापन्नद्वित्रिसम्बन्धित्वेन द्विप्रभृतिबो
कत्वमित्याहुः।

द्विस्त्रयो येषामिति विग्रहे तु द्विशब्दस्य द्विगुणितवाचित्व
द्विगुणितत्रिपर्य्याप्तस्ववृत्तिसंख्यासम्बन्धित्वेन द्वित्रा र
इत्यादौ षणामवगमः सुजन्तभावेनैव विग्रहस्य व्युत्पन्नत्व
पञ्चाधिको दश येषामित्यर्थे पञ्चदशा इत्यादिको न समा
सर्वचोक्तबहुव्रीहौ राजादित्वादतिचरमस्वरादेर्लोपः। स्वध
सम्बन्धी चैत्र इत्यादौ स्वधनस्य सम्बन्धीति व्युत्प

स्वगर्भार्थस्य सम्बन्धित्वेन चैतं बोधयन्नपि तत् पुरुषो न स्वांशस्य निरूढलक्षणया प्रत्यायकपदेन घटितः। तथा आधुनिकलक्षणया स्वपटबोधकेन पटपदेन गर्भितः पटसम्बन्धीत्यादिरपि। मातृभक्त इत्यादिकस्तु तत्पुरुषः स्वमातृत्वेन निरूढलक्षणया बोधकेन विशेषितोऽपि न तत्सम्बन्धित्वेन बोधकः। न च द्वौ मुनी त्रयो वा मुनयो यस्येति वक्तृत्वार्थकषष्ठ्या विग्रहे स्ववक्तृमुनिद्वयादिसम्बन्धित्वेन बोधके द्विमुनि त्रिमुनि वा ग्रन्थ इत्यादौ द्विमुन्याद्यव्ययीभावे स्वमातृसम्बन्धित्वेन बोधके मातृसम्बन्धीत्यादि तत्पुरुषे चातिव्याप्तिस्तदन्यत्वेनापि विशेषणीयत्वात्। इदमत्रावधातव्यं चित्रगुरस्तीत्यादौ चित्राभिन्नस्वगोसम्बन्धिप्रभृतीनां प्रतीत्यर्थं न चित्रगुसमुदायस्य लक्षणा तस्य वाक्यत्वेन लक्षकत्वायोगात् वाक्ये लक्षणायाः प्रागेव परास्तत्वात्। न च चित्रपदमेव तत्र चित्राभिन्नस्वगोसम्बन्धि लक्षकं गोपदन्तु तादृशार्थे तात्पर्यग्राहकं लक्षणाया निरूढत्वसम्पादकं वेति वाच्यं चित्रपदस्य प्रथमान्तत्वाभावेन तदर्थेऽस्तित्वाद्यन्वयस्यानुपपत्तेः प्रथमान्तपदोपस्थाप्यस्यैव भावनाविशेष्यत्वात्। अन्यथा राजपुरुषोऽस्तीत्यादावपि राजन्यस्तित्वान्वयप्रसङ्गात् प्रकृत्यर्थ एव सुपः संख्याबोधकत्वव्युत्पत्तेः गोपदोत्तरप्रथमया चित्रपदोपस्थाप्ये चित्राभिन्नस्वगोसम्बन्धिन्येकत्वबोधनायोगाच्च। यत्तु गोपदमेव तादृशगोसम्बन्धिलक्षकं चित्रपदन्तु तत्र तात्पर्यादिग्राहकमिति मणिकारादुक्तं तन्न युक्तं पूर्वपदार्थसाकाङ्क्षस्यैव स्वार्थस्योपसर्जनतायां गोपदस्य ह्रस्वविधानात् चित्रपदार्थेन समं तदर्थस्यानन्वये तदनुपपत्तेरन्यथा गौरस्तीत्यादावपि चित्राभिन्नस्वगोसम्बन्धित्वेन गोपदस्य लक्षणायामुदन्तत्वापत्तेः न च नामोत्तरवर्त्तिन एव गोपदस्य स्वार्थोपसर्जनतायां ह्रस्व-

विधिर्यत्र गोपदेन लक्षणयोपस्थापिते स्वगोसम्बन्धिन्यभे
चित्रपदस्यान्वयः तत्र चित्रगवोऽस्तीत्यादिकर्मधारयेऽपि गो
दस्य ऽक्षत्वप्रसङ्गात् वस्तुतः कृतपाकश्चैत्र इत्यादौ स्वकृतिवि
पाकसम्बन्धित्वादिना चैत्राद्यवगमः पूर्वपदस्य परपदस्य
लक्षणया न सम्भवदुक्तिकस्तयोरशक्तत्वेन भाक्तत्वायोगा
न च तत्र क्तादिवर्णस्य स्वरूपशक्तघञादिप्रत्ययस्य वा स्वक
विषयपाकसम्बन्धिनि लक्षणा तन्निरूढत्वसम्पादकञ्च शब्दान्त
मिति साम्प्रतं कृतादिपदेभ्यः स्वार्थानुपस्थितावपि तदन्व
वोधप्रसङ्गात् घञादिमात्रस्य नामत्वाभावेन तन्मात्रोपस्थाप्य
सुबर्थान्वयायोगात् प्रकृत्यर्थावच्छिन्नस्यैव कृदर्थस्य पदार्थान्त
ऽन्वयबुद्धेर्व्युत्पन्नत्वाच्च तस्माच्चित्रगुरित्यत्र गोपदं स्वगोसम्बन्धि
लक्षकं तदेकदेशे च गवि तादात्म्येन चित्रपदस्यान्वयः । न
च गोधर्मिकान्वयबुद्धौ तद्धर्मिकवृत्तिज्ञानत्वेन हेतुत्वात् पदा
कदेशे गवि चित्रस्यान्वयो दुर्घटः चित्रव्रजोऽस्तीत्यादौ गोस्वा
रूपस्य व्रजस्यैकदेशे गवि चित्रस्यानन्वयेन तादृशव्युत्पत्ते
वश्यकत्वादिति वाच्यं घटशून्यं चैत्रगृहमित्यादि तत्पुरुषे भेदेन
चित्रगुप्रभृतिबहुव्रीहावप्यभेदेन पदार्थैकदेशधर्मिकान्वयबोध
व्युत्पत्तिवैचित्र्येण सम्भवात् फलानुरोधित्वात् कल्पनाया
प्राचैरपि सुन्दरराजपुरुष इत्यादावभेदेन सुन्दरादेः पदार्थैकदे
राजन्यन्वयबुद्धेः स्वीकाराच्च । यत्तु गोपदं तत्र स्वकीयगोत्वे
सम्बन्धित्वेन च लक्षकमतश्चित्रस्य गोपदार्थ एव स्वकीये गवि
तस्य च सम्बन्धिनि अन्वयान्न पदार्थैकदेशान्वयित्वमेकपदार्थ
योश्च मिथोऽन्वयः कृतिवर्त्तमानत्वयोरिव नाव्युत्पन्न इति तन्मन्द
तथा सति चित्रगुः पुरुषस्तस्याः सञ्चारोऽतिमनोहर इत्यादौ
तदादेः स्वकीयत्वादिपरामर्शकत्वापत्तेः पदार्थैकदेशस्यैव परा
मर्शकतायाः क्वचिदप्यव्युत्पन्नत्वादिति । एवञ्चारूढवानरो

वृक्ष इत्यादावपि रुहधातुना स्वकर्मकारोहणकर्तृवानरपदेन च वानरसम्बन्धिन उपस्थापनादमीषामाकाङ्क्षादिधीसाचिव्यादेव स्वकर्मकारोहणकर्तृभिन्नवानरसम्बन्धित्वादिना वृक्षादेर्बोध इत्यास्तां विस्तरः।

न चारूढो वानरो यस्य वृक्षमित्यादिविग्रहादारूढवानरपदं स्वकीयवृक्षारूढवानरसम्बन्धित्वेन ग्रामादिकं बोधयदपि बहुव्रीहिः स्यादिति ताद्दशवाक्यस्य विग्रहत्वं खण्डयन्नाह।

अस्त्वेकं प्रथमान्तं सत् सुबन्तैरितरैः सह।
यदा भेदसुबन्तेन साकाङ्क्षं नाम विग्रहः॥

अस्य बहुव्रीहेर्घटकमेकं नाम प्रथमान्तं सत् सुबन्तैरितरनामभिः सह भेदार्थकसुबन्तयच्छब्देन साकाङ्क्षं विग्रहः कथ्यते नचोक्तवाक्ये तथा सुबन्तस्यापि यदस्तत्र वृक्षपदेनैव साकाङ्क्षत्वात् आरूढो वानरो य इत्यादौ तु यच्छब्दो न भेदार्थकसुबन्त इति न ताद्दशस्यापि वाक्यस्यार्थे बहुव्रीहिः पतितस्य धनं यस्य दण्डाहतो यस्मादित्यादिकस्तु समानार्थकसुबद्वयोमन्तर्भाव्य न विग्रहः सम्प्रदायविरोधात् एवं घटेन पटो यत्रेत्यादिकः महाद्यर्थमन्तर्भाव्यापि सुबन्तैरिति तु सम्भवाभिप्रायं तेनाघटो देश इत्यादिबहुव्रीहेर्न घटो यत्रेत्यादिविग्रहेण नञादेः सुबन्तत्वाभावेऽपि नाव्याप्तिः सपुत्र इत्यादौ तु सह पुत्रो येनेत्यादिरेव विग्रहो न तु पुत्रेण सहेत्यादिरन्यपदार्थाप्राप्तेः सघटो देश इत्यादौ च सह घटो येनेत्यादिविग्रहे सहार्था वैशिष्ट्यं न तु सामानाधिकरण्यं घटे देशस्य तदबाधात्। जीवत्पितृकइत्यादेस्तु जीवन् पिता यस्येति विग्रहो यस्य च पिता जीवन्नित्येवं जीवद्विधेयकान्वये निराकाङ्क्षोऽपि जीवदभिन्नः पिता यदीय इत्यन्वय एव साकाङ्क्षः। इदन्तु बोध्यं यत्र विग्रहवाक्ये सुबन्तयदः क्रियासाकाङ्क्षत्वसम्भवस्तत्र तदर्थान्वितक्रियागर्भित

एवार्थं विना बाधकं बहुव्रीहिर्व्युत्पन्नः तेन गन्तव्यो ग्रामो यस्येति विग्रहे गन्तव्यग्रामकश्चैत्र इत्यादितः स्वकर्तृक गति कर्मग्रामसम्बन्धित्वेनैव चैत्रादेरौत्सर्गिको बोधः कदाचित्तु तात्पर्यादिवशाद्गन्तव्याभिन्नस्वकीयग्रामसम्बन्धित्वेन यत्र तु न यद स्तत्साकाङ्क्षत्वसम्भवस्तत्र विशेषविध्यन्तत्वे यन्नामार्थमुख्य विशेष्यको विग्रहवाक्याद्बोधः सुबन्तयदर्थान्वित तन्नामार्थ गर्भित एवार्थस्तएव धनो दासा यस्येत्यर्थे यदायधनवान् दास स्तस्य धनिदासकोऽयमित्यादितो नावगमः किन्तु धनवा स्वदाससम्बन्धिन एव चन्द्रस्य चूडायां यस्येत्यादिकस्तु विग्रहो यदीयश्चन्द्रश्चूडायामित्यर्थकः किन्तु यदीयचूडायां चन्द्र इत्यर्थकस्तादृशार्थं एव सप्तम्यन्तेनेन्द्वादेर्विशेषतो बहुव्रीहि विधानात्तेन चन्द्रचूडः शिव इत्यादौ स्वचूडावृत्तिचन्द्रसम्बन्धि त्वेनैव शिवस्यावगमो न तु चूडावृत्तिस्वकीयचन्द्रसम्बन्धित्वेन तस्य गगनादेर्वा बोधः ससम्बन्धिकपदार्थस्य विशेषणत्वस्थले तु सुबन्तयदर्थान्वितेन तादृशपदस्यार्थेन गर्भितेऽपि अतएव चैत्र पुत्रकृतोत्कर्ष इत्यादौ स्वपुत्रकृतोत्कर्षवानेव चैत्रादिः प्रतीयते नत्वन्यदीयपुत्रकृतोत्कर्षाश्रयः।

बहुव्रीहिं विभजते।

तदतद्गुणसंविज्ञानौ द्वौ भेदौ तदादिमः।
विग्रहस्य विशेष्यो यत्तद्विशेष्यकबोधकृत्॥

तद्गुणसंविज्ञानोऽतद्गुणसंविज्ञानश्च बहुव्रीहेर्द्वौ भेदौ तत्र विग्रहवाक्यस्य विशेष्यविधया प्रत्याय्यो योऽर्थस्तद्विशेष्यकबोध कृद्बहुव्रीहिः तयोरादिमस्तद्गुणसंविज्ञानस्तस्य स्वार्थगुणी भूतस्य सम्यग्विशेष्यविधया विज्ञानं यस्मादिति व्युत्पत्त्या सान्वयसंज्ञाकत्वात् तद्भिन्नश्चातद्गुणसंविज्ञानश्चरम इत्यर्थाद् गम्यते घटस्वरूपः पदार्थः इत्यादितो हि घटः स्वरूपं यस्येति

विग्रहस्थले स्वस्वरूपाभिन्नघटसम्बन्धित्वेन घटाभिन्न स्वस्वरूपसम्बन्धित्वेन वा विग्रहविशेष्यं कलसमेव विशेष्यविधया बोध्यते घटस्य स्वरूपं यस्मादिति विग्रहे च विग्रहस्य यद्विशेष्यं ततोऽन्यदेव स्वजन्यस्वरूपाभिन्नघटसम्बन्धित्वेन कुटादिर्गण इत्यादिरपि कुट आदिर्यस्येति व्युत्पत्त्या कुटाभिन्नस्य स्वधर्मिक व्यवस्थाधर्मिणः सम्बन्धित्वेनं धात्वन्तरमिव कुटमपि बोधयं स्तद्गुणसंविज्ञान एव बहुव्रीहिः।

प्राचां मतेन तद्गुणसंविज्ञानबहुव्रीहिमन्यथा निर्वक्ति।

यः स्वार्थघटकार्थस्य स्वार्थान्वयिनि बोधने।
अनुकूलो बहुव्रीहिः स तयोरपवादिनः॥

यो बहुव्रीहिः स्वार्थस्यान्वयिनि स्वार्थघटकस्याप्यर्थस्यान्वयबोधने समर्थः स तयोस्तद्गुणसंविज्ञानयोरादिमः लम्बकर्णमानय हारग्रीवं पश्येत्यादौ हि बहुव्रीहिर्लम्बलकर्णसम्बन्धिनः स्वग्रीवावृत्ति हारसम्बन्धिनश्च स्वार्थस्यान्वयिनि कर्मत्वादौ स्वार्थघटकीभूतस्य तादृशकर्णहारादेरपि व्युत्पत्तिवैचित्र्येण्यान्वयबोधने समर्थ इत्येवं विध एव तद्गुणसंविज्ञानस्तद्भिन्न एव चार्थादतद्गुणसंविज्ञानः यथा दृष्टसागरमानय इत्यादाविति प्राचां मतम्।

व्युत्पत्तिवैशद्यार्थमन्यथापि पुनर्विभजते।

स्वान्तर्निविष्टद्वित्र्यादिनामभिर्विग्रहात् पुनः।
बहुव्रीहिर्बहुविधो द्विपदत्रिपदादिकः॥

द्वित्रिचतुरादिभिरेव स्वघटकनामभिर्विग्रहवशात् द्विपदत्रिपदचतुष्पदादिको बहुव्रीहिर्बोध्यः चित्रा गौर्यस्येति विग्रहाच्चित्रगुरित्यादौ द्विपदस्यैव जरती चित्रा गौर्यस्य महन्नीलमुत्पलं यस्येत्यादि विग्रहाज्जरतो चित्रगुर्महन्नीलोत्पला सरिदित्यादौ त्रिपदस्यापि बहुव्रीहेरावश्यकत्वात् जरती चित्र-

गवो यस्य महन्नीलोत्पलं यत्रेति द्विपदविग्रहे जरतीशब्दे पुंव
वस्य महच्छब्दे चाकारस्य प्रसङ्गादुत्तरपदे तयोर्विधानात् समा
सान्त्यपदस्य चोत्तरपदत्वात् एकत्र द्वयमिति न्यायेन गवि नि
जरतीरभेदानुभवस्योक्तरीत्या सम्पादयितुमशक्यत्वेन तदर्थं
त्रिपदादिबहुव्रीहेरावश्यकत्वाच्च ।

द्वन्द्वं लक्षयति ।

यद्यदर्थकयन्नामव्यूहो यद्यत्प्रकारके ।
बोधे समर्थः स द्वन्द्वः समासस्तावदर्थकः ॥

यद्यदर्थोपस्थापकस्य क्रमिकयादृशनामस्तोमस्य निश्च
स्तत्तदर्थप्रकारकान्वयबोधं प्रति तत्त्वेन समर्थस्तादृशनामनिच
एव तावदर्थको द्वन्द्वसमासः । पाणिपादं वादय धवखदि
च्छिन्धीत्यादौ हि कर्मत्वाद्यंशे करचरणादिप्रकारकान्वयबो
प्रत्ययादिधर्मिकः करचरणाद्युपस्थापकस्य पाणिपादादिक्रमि
नामस्तोमस्याव्यवहितोत्तरत्वसम्बन्धेन निश्चयः कारणम् अत
पाणिपादादिसमुदायः करचरणादितत्तदर्थे द्वन्द्वः । यत्त
पाणिपादमित्यादौ समाहारद्वन्द्वे सर्वत्रोत्तरपदे पाणिपादादि
साहित्ये लक्षणा अतएव नित्यं तत्रैकवचनं समाहारस्यैकत्वा
पदान्तरन्तु तादृशलक्षणाया निरूढत्वसम्पादकं तथाविधसाहि
त्यस्य च स्वाश्रयनिष्ठत्वादिसम्बन्धेनैव द्वितीयाद्यर्थकर्मत्वादे
साकाङ्क्षत्वात् पाणिपादं वादयेत्यादेर्नायोग्यत्वमिति प्राचैक्त
तन्न युक्तं तुल्यवदेकक्रियान्वयित्वं बुद्धिविशेषविशेष्यत्वं वा
पाणिपादयोः साहित्यं तस्य च नानात्वसम्भवेन तद्गतद्वित्वादि
बोधार्थं समाहारद्वन्द्वादपि द्विवचनाद्यापत्तेर्दुर्वारत्वात्
साहित्यस्य द्विबहुत्वेऽपि न समाहारद्वन्द्वस्य द्विवचनादिसाका
ङ्क्षत्वं तादृशद्विगोरिवेति चेत् तर्हि पाणिपादप्रभृतीनां नाना
त्वेऽपि न तदर्थकस्य द्वन्द्वस्य द्विवचनाद्याकाङ्क्षत्वमित्येव वक्तुं

मुचितं कृतं साहित्यभक्त्या हस्त्यश्वं धनमित्यादिरयोग्यताया दुर्वारतापाताच्च नामार्थयोर्भेदान्वयस्याव्युत्पन्नत्वेन हस्तिनामश्वानाञ्च साहित्यस्य स्वाश्रयत्वादिसम्बन्धेन धनादावन्वयायोगात् तादृशसाहित्ये धनादेरभेदविरहाच्च समाहारपरिभाषा तु क्लीवलिङ्गत्वनित्यैकवचनत्वादिपदसंस्कारोपयोगितयैवोपपन्ना न द्वन्द्वस्यार्थव्यवस्थापिका। एतेन धवखदिरावित्यादावितरेतरद्वन्द्वेऽप्युत्तरपदे धवखदिरसाहित्याश्रये लक्षणा अन्यथा द्विवचनादेः प्रकृत्यर्थतावच्छेदकवत्येव पर्य्याप्तिसम्बन्धेन स्वार्थद्वित्वाद्यनुभावकत्वव्युत्पत्तेर्धवखदिरावित्यतो धवद्वयस्य खदिरद्वयस्य च प्रतीत्यापत्तेरिति मीमांसकानां मतमप्यपास्तं तुल्यवदेकक्रियान्वयित्वं धवखदिरविशेष्यकधीविशेष्यत्वं वा धवखदिरयोश्च साहित्यं तदाश्रयश्च धवद्वयादिकमपीति तादृशसाहित्याश्रयलक्षकत्वपक्षेऽपि धवखदिरावित्यतो धवद्वयादिबोधस्य दुर्वारतापत्तेः न च त्रितया विशेष्यकधवखदिरधर्म्मिकधीविशेष्यत्वमेव प्रकृते धवखदिरयोः साहित्यं तच्च न धवद्वयादेरिति वाच्यं तादृशसाहित्यान्वयस्यानुभवेनास्पर्शनात् तस्मात् यत्र नानाधर्म्माणां प्रकृत्यर्थतावच्छेदकत्वं तत्र तत्तद्धर्म्मावच्छिन्ने समुदित एव पर्य्याप्तिसम्बन्धेन द्वित्वादिबोधने द्विवचनादिकं साकाङ्क्षं न तु तादृशैकधर्म्मावच्छिन्नं परित्यज्य तथाविधापरधर्म्मावच्छिन्ने यतो धवखदिरावित्यादितो धवयोः खदिरयोश्च बोधप्रसङ्ग इति तत्त्वम्। घटघटेत्यादिकस्य घटकलसेत्यादिकस्य घटतद्घटेत्यादिकस्य च क्रमिकनामस्तोमस्य निश्चयत्वेन घटादेरन्वयबोधं प्रत्यहेतुत्वमतो न तादृङ्नामनिवहो घटाद्यर्थे द्वन्द्वः अतएव समस्यमानपदार्थयोस्तत्त्वावच्छेदकयोर्वा यत्र मिथो भेदस्तत्रैव द्वन्द्वस्य साधुत्वसूचनाय चार्थे द्वन्द्व इति पाणिनिः प्राह। अतएव भेदगर्भसमुच्चयार्थकं च शब्दमन्त-

भाव्य धवस्य खदिरस्येत्यादिकं विग्रहमस्य प्रयुञ्जते स
समुपाददते च तत्र मिथोभेदप्राप्त्यर्थश्चकारद्वयं पीततत्पट
त्वाद्यात्मामित्यादौ तत्पटादेः पीताद्यभिन्नत्वेऽपि पीतत्वत
पटत्वाद्योः पदार्थतावच्छेदकयोरस्त्येव भेदः सुवर्थस्तु द्वित्वं
तत्र प्रकृत्यर्थेऽन्वेति पर्याप्तिसम्बन्धेन पीततत्पटे तस्य बाध
सुवर्थद्वित्वादेस्तादृशसम्बन्धेनैव प्रकृत्यर्थसाकाङ्क्षत्वात् पर
प्रकृत्यर्थतावच्छेदकयोः पीतत्वतत्पटत्वयोरेव व्युत्पत्तिवै
धयात् अतएव द्व्यणुकारम्भकसंयोगनाशेभ्यः कार्य्यद्रव्यं नश्
तीति भाष्यस्य योग्यतासम्पत्तये सुबर्थकत्वस्य कार्य्यद्रव्ये
ऽन्वयमभिधित्सुनाचार्य्येण जात्यभिप्रायकमेकवचनमिति गु
किरणावल्यामभिहितम् । अतएव च श्यालो सुभ्रातरः पत्
स्वामिनो देवृदेवरौ इत्यत्र च द्विवचनमभिहितम् स्वामिनो श्याल
देवृदेवरोभयपदवाच्या इत्यर्थः सुभ्रात्रादिसिद्धः सङ्गच्छत
यदि च पटद्वयासत्त्वेऽपि भूतले पीतपटावित्यादिकः प्रयो
स्यात् पीतत्वपटत्वोभयाश्रयस्य तत्र सत्त्वादेवं पीतपटयोर्भे
इत्यादितः शुक्लपटत्वादेरबोधप्रसङ्गश्च तदंशे सुबर्थद्वित्व
प्रकारत्वादित्यादिसूक्ष्ममीक्ष्यते तदा गोदौ ग्राम इत्यादौ वि
साधुत्वार्थमेव तत्र द्विवचनमिति पदार्थः । विद्यते विन्द
विनत्तोनाममनिट् इत्यत्र विद्यत इत्यादिशब्दो न विदधातुत्वे
नोपस्थापकः किन्तु सत्ताद्यर्थकतादृशधातुत्वेनैव । मृगपाण्ड
रयोः पदार्थयोर्भेदेऽपि हरिणहरिणावित्यप्रयोगात् समान
शब्दयोर्द्वन्द्वप्रसक्ताविकशेषो व्युत्पत्तिसिद्धस्तेन हरिणावित्य
लुप्तलुप्ताभ्यामेव हरिणपदाभ्यामुपस्थितयोर्मृगपाण्डरयोर्बो
हरौ नमस्यावित्यत्राप्युक्तरीत्यैव हरिपदाभ्यां विष्णुचन्द्रयोरव
गतिः अन्यथा हरिहरौ नमस्यावित्यपि प्रयोगापत्तेः हरो
हरयश्चेति विग्रहस्थले यत्र हरय इत्यादितः समस्यमानपदा

र्थानामवान्तरसंख्यागमस्तत्र तत्तत्संख्यावच्छिन्नस्वार्थलक्षकस्य लुप्तस्य हर्य्यादिपदस्योत्तरत्वेन प्रतिसंहितमेव हर्य्यादिपदं तथाविधस्वार्थस्य लक्षणया बोधकं तदप्रतिसन्धाने तु श्रुतमेव हरिपदं विष्णुहरयोः सिंहत्रयस्य चैकया लक्षणया शक्तिभ्रान्त्यैव वा न च विग्रहस्थसुबर्थस्य द्वित्वादेः समासाप्रतिपाद्यत्वनियमात्तथाविधद्वित्वत्रित्वान्तर्भावेण द्वन्द्वस्यैवासाधुत्वादुक्तक्रमेणैकशेषा न युक्तः शलाकापरि हस्त्यश्वमित्यादौ व्यभिचारेणोक्तनियमस्यासत्त्वात् एकत्वे चैकत्वानि चेति विग्रहे च एकत्वानीत्येकशेषस्य गुणकिरणावल्यामाचार्य्यैरभिहितत्वाच्च हंसश्च हंसी च इत्यर्थे हंसहंस्यावित्यप्रयोगात् तत्रापि पुंसा स्त्रियाः सारूप्ये इत्यनुशिष्टहंसीपदस्य लोपे हंसावित्यत्र लुप्तमेव हंसीपदमनुसन्धाय स्त्रीपुंसयोर्बोधः तल्लोपमजानतस्तु हंसपदे स्त्रीहंसत्वपुरुषहंसत्वाभ्यां विभिन्नरूपाभ्यामेकस्याः शक्तेर्लक्षणाया वा ग्रहादेव । यत्तु तत्र हंसपदमेव लक्षणया हंसीत्वेन शक्त्या च हंसत्वेन बोधकं सुबर्थस्तु पुंस्त्वं हंस एवान्वेति न तु हंस्यामयोग्यत्वात् इति मतं तन्न, तथा सति स्त्रीहंसत्वहंसत्वयोः पदार्थतावच्छेदकयोर्मिथो भेदविरहेण द्वन्द्वाप्रसक्तावेकशेषस्य दुष्करत्वापत्तेः अन्यथा घटतद्वदावित्यपि द्वन्द्वप्रसङ्गात् हंसी च हंसाश्चेति विग्रहेऽपि हंसा इत्यतो हंसद्वयहंसत्रययोः प्रागुक्तरीत्यावगमः दुन्दुभी च दुन्दुभिश्चेति विग्रहे दुन्दुभी सुन्दरावित्यत्राक्षभेर्य्योर्बोधनस्थले पुंलिङ्गस्यैव दुन्दुभिशब्दस्य शिष्टतया तद्विशेषणत्वादेव सुन्दरादेः पुंस्त्वं युवा च युवतिश्च इत्यर्थे युवानावित्यत्राप्युक्तरीत्यैव युवतीयौवनवतोर्बोधः वरटाहंसौ लक्षणासारसावित्यादौ तु स्त्रीपुंसयोर्द्वन्द्वेऽपि पदसारूप्यविरहान्नैकशेषः दम्पत्यर्थनप्रकरणे ब्राह्मणावानयेदित्यत्रापि ब्राह्मणश्च ब्राह्मणी च इति विग्रहे प्रागुक्त-

द्दिया ब्राह्मणभार्य्यापत्योरवगमः। एकश्चैका चेत्यत्र ए
द्वौ च द्वे चेत्यत्र द्वौ उभे चोभौ चेत्यत्र उभे त्रयश्च तिस्र
इत्यत्र च विग्रहे त्रय इत्यादिरेकशेष इष्यत एव। ग्राम्या
शफेष्वनकृषेषु स्त्रीपुंसयोर्बहुत्वमन्तर्भाव्य सारूप्येण द्वन्द्व
तु पुंस एव लुक् तेन मेष्यश्च मेषाश्चेत्यर्थे मेष्य इत्यत्रा
लुप्तं बहुमेषाणां लक्षकं मेषपदं प्रतिसन्दधत एव बहुमे
णामनेकमेषीणाञ्चावगमः। एवं महिषाश्च महिष्यश्चेत्य
महिष्य इत्यत्रापि महिषपदं बहूनां महिषाणां मृगा
मृग्यश्चेत्यर्थे मृगा इत्यत्र तु मृगादेरग्राम्यत्वान्न पुंसो
परन्तु स्त्रियाः यथा गर्द्दभाश्च गर्द्दभ्यश्चेत्यर्थे गर्द्दभा इत्यत्रा
खराणामेकशफत्वात् वर्करश्च वर्कर्य्यश्च इत्यर्थे बर्करा
त्रापि तरुणार्थकत्वात् स्वसा च भ्राता चेत्यर्थे भ्रातराविव
पुत्रश्च दुहिता चेत्यर्थे पुत्रावित्यत्र च विरूपैकशेषेऽपि स्वा
पदं दुहितृपदञ्च लुप्तं प्रतिसन्धायैव भ्रातृभगिन्योः पुत्रक
योश्चावगमः। ज्येष्ठपुत्रदुहित्रोश्च ज्यैष्ठे मासि न कार
त्यादिकस्तु प्रयोगः परिचिन्तनीयः। स च मैत्रश्चेति विग्र
त्यदादिना तदन्यस्य द्वन्द्वे लुकि तावित्यत्रापि लुप्तं मैत्रा
पदमनुसन्दधत एव मैत्राद्यवगमः स च त्वञ्चेत्यादिविग्रहे
किं पदान्यत्यदादिद्वयगर्भद्वन्द्वे तु पूर्वस्यैवं लुक् तस्यैव
त्यदादेर्लुकि युवामित्यत्र त्वादावप्युक्तक्रमेणैव तदर्थयुष्मदर्थ
बोधः स च सचेत्यत्रापि विभिन्नार्थयोर्विग्रहे स्वपूर्वागणितो
तदादिः स्वोत्तरापठित एव तत्तन्मानुषतुल्योऽसौ यद्दृहिण
निर्मलेत्यादौ तु न त्यदादिगणेन द्वन्द्वः परन्तु तदाद्यव्यये
यथा तत्तत्तामसभूतभीतय इत्यादौ यत्तदादिव्यतिरिक्तानां
वाव्ययानां सरूपैकशेषस्य व्युत्पन्नत्वात् प्रयोगानुरोधित्
कल्पनायाः कश्च त्वञ्चेत्यादिविग्रहेण किमा तादृशद्वन्द्वे

तद्‌ध्यस्यैव त्यदादेर्लुकि काविल्यादिक एव प्रयोगः चैत्रस्य पितराविल्यत्रापि विरूपैकशेषे लुप्तस्य मातृपदस्य स्मरणात् मातुरवगमः तदस्मरतस्तु पितृपदे जनकशरीरत्वेन लक्षणया मातापित्रोरवगतिरिति प्राञ्चः। कौमारास्तु मात्रा पितुर्द्वन्द्वे मातापितृभ्यां मातरपितराभ्यामिति प्रयोगद्वयोर्दर्शनाच्चैत्रस्य पितराविल्यत्र नैकशेषः परन्तु पुष्पवन्तादिपदवत् मातृत्वपितृत्वाभ्यां विभिन्नरूपाभ्यामेकशक्तिमदेव नियतद्विवचनाकाङ्क्षं पितृपदं प्रकृत्यन्तरम् एवं श्वश्र्वाश्च श्वशुरस्येत्यर्थे श्वशुरौ इत्यत्र श्वशुरपदमपि श्वश्र्वा श्वशुरस्य द्वन्द्वे श्वश्रूश्वशुराविल्येव प्रयोगादित्याहुः।

द्वन्द्वं विभजते।

द्वौ भेदावस्य शास्त्रोक्तौ समाहारेतरेतरौ।
एकान्यवचनाकाङ्क्षाहीनोपादानतस्तौ॥

अस्य द्वन्द्वस्य द्वौ भेदौ समाहार इतरेतरश्च शास्त्रसिद्धौ तत्रैकवचनान्यसुबाकाङ्क्षाविहीनः समाहारः तथाविधसुबाकाङ्क्षश्चेतरेतरः पाणिपादं इस्त्यश्वमित्यादितो हि करचरणादीनां बहूनामप्यवगतावेकवचनमेव प्रमाणं धवखदिरावित्यादौ द्विवचनादेः पदिस्कन्दिखिदेर्दादित्यादौ तु पदिस्कन्दिभ्यां सहितः खिदिरिति विग्रहे मध्यपदलोपी कर्मधारयो यथा श्रव्यास्यतिव्यासेरिति अणिग्रन्यादौ।

उपपदसमासं लक्षयति।

यदुत्तरपदं नामानुत्तरं यदवोधकम्।
धातुज्ञज्जसुपपदसमासः स तदन्तकः॥

धातुजञ्ञां निष्पन्नं यस्योत्तरपदं शब्दान्तरानुत्तरं सत् यादृशार्थस्य बोधं प्रत्यसमर्थं तादृशार्थकान्यपदकः समासः उपपदसंज्ञकः कुम्भकारः चौरघातीत्यादिके तूपपदसमासे धातुजञ्ञां निष्पन्नं कर्त्राद्यर्थकं कारादिपदं पदान्तरानुत्तरं सन्

कर्त्रादेरन्वयबोधक्षमं चन्द्रनिभमित्यादौ तु तत्पुरुषे निभादि पदं सदृशाद्यर्थं तादृशमपि न धातुजन्यं निष्पन्नमि तद्व्युदासः ।

विभजते ।

कारकोपपदकः षड्विधोऽयमिति स्मृतः ।
कर्मकर्त्राद्युपपदभेदादृइविधस्तथौ ॥

कारकेषु श्रोत्तानशयः पूर्वसर इत्यादावुत्तानादिः कर्त्ता कुम्भ कारः सौवीरपायीत्यादौ कर्म कच्छपः पार्श्वशय इत्यादौ क याम् उखास्रत् वहस्रट् इत्यादावपादानं खशयः कुरुच इत्यादावधिकरणमुपपदं सम्प्रदानन्तु न कुत्रापि दृश्यते दृश्यं च ब्रह्मभूयमित्यादौ कारकभिन्नेनाप्युपपदेन समास इत्यस नेकविध एव न तु कारकमात्रोपपदकत्वात् षड्विध ए न्यूनत्वाधिकत्वाभ्यां विभागव्याघातादिति सूचयन्नप्याप्य समासः परन्त्वव्ययपदस्येव नञा समस्तस्येव तस्य स्वार्थबोधे व्युत्पन्नत्वान्न केवलस्य तस्य प्रयोगः ।

यौगिकेषु क्रमप्राप्तं तद्धितान्तं नाम लक्षयति ।

यन्नाम तद्धितं यच्च यत्क्रमं सद्यदर्थकम् ।
यद्वयं यत् क्रमं तत्र तद्धितान्तं निगद्यते ॥

यद्यपि नामोत्तरतद्धितत्वं तद्धितोत्तरनामत्वं वा प्रले बहुगुडो द्राक्षेत्यादौ दाक्षिरित्यादौ चाव्यापकमेव तद्धितां नाम्नि तथापि यादृशं नाम यच्च तद्धितं यादृशानुपूर्व्यवच्छि सद्यादृशार्थस्यान्वयबोधे समर्थं तादृशानुपूर्व्यवच्छिन्नं तदद्व मपि तादृशार्थे तद्धितान्तं नामेत्यर्थः पचतितरामित्यादिकं नामैव न प्रागेव तु तद्धितान्तं तस्यापि लक्ष्यत्वे यः शब्द स्तद्धितं यच्चेति पठनीयं टावादेरपि तद्धितत्वोपगमादना ब्राह्मणीत्यादेर्नासंग्रह इति वदन्ति ।

कृदन्तं नाम लक्षयति।

यद्धात्वर्थान्वितस्वार्थधीकृत् क्रियादृशं भवेत्।
तद्धातूत्तरगं तत् सत् कृदन्तं नाम तादृशम्।

यद्धात्वर्थान्वितस्वार्थान्वयबोधं प्रति यादृशानुपूर्व्यवच्छिन्नस्य यत्कृतो निश्चयः कारणं तद्धातूत्तरगं तत् कृदेव तादृशानुपूर्व्यवच्छिन्नं सत् कृदन्तं नाम यथा पाठकपाठ्यमानादि तद्धि धात्वर्थनान्वितस्य स्वार्थकर्त्रादेः कर्मत्वादावन्वयबोधं प्रति द्वितीयाद्यंशे तादृशानुपूर्वीकत्वेन निश्चीयमानं हेतुः चैत्रेण ग्रामस्य गन्तव्यमित्यादौ धात्वर्थे स्वार्थमिष्टसाधनत्वादिकं बोधयदपि तव्यादिकं धात्वर्थनिष्ठविषयतानिरूपितस्वार्थविषयताकबोधजनकत्वेन धात्वर्थान्वितस्वार्थकमेव भावकृतामपि स्वरूपार्थकत्वं व्युत्पादितमेव।

तदेवं रूढयोगाद्यर्थभेदेन नाम्नश्चातुर्विध्यमुक्तं सम्प्रति शब्दसंस्कारानुगुणलिङ्गभेदेन त्रैविध्यमाह।

स्त्रीलिङ्गमपि पुंलिङ्गं क्लीवलिङ्गमिति त्रिधा।
शब्दसंस्कारसिद्ध्यर्थं भाषया नाम भिद्यते॥

स्त्रीलिङ्गं पुंलिङ्गं नपुंसकलिङ्गमित्यपि त्रिधा नाम भिद्यते तत्र स्त्रीलिङ्गत्वादिकं न स्त्रीत्वादिवाचकत्वं तटः तटी तटमित्यादौ प्रकृत्यर्थस्य तटादेः स्त्रीत्वाद्यवगतावयोग्यतापत्तेः। परन्तु स्त्रीलिङ्गत्वादिना परिभाषितत्वमात्रं परिभाषायाः प्रयोजनञ्चेह पदसंस्कारः सोऽपि तट इत्यादौ पुंस्त्वेन सुबादिसद्भावः तटीत्यादौ स्त्रीत्वेन ङीबादिप्रत्ययः तटमित्यादौ क्लीबत्वेन सुबादेर्लुगादिरिति दुन्दुभी सुवर्णं इत्यादौ तु शब्दसंस्कारस्यैव फलमर्थविशेषस्य लाभो न ह्ययं दुन्दुभिरिदं सुवर्णमित्यादितोऽधस्वाशोतिरत्तिकापरिमितस्वर्णादेश्चावगमः। यत्र च सम्पदादिशब्दे स्त्रीलिङ्गत्वादिप्रयुक्तो नास्ति संस्कारस्य

विचारे वा इत्यस्य मीमांसते दान खण्डने इत्यस्य दीदांसते शान तेजने इत्यस्य शीशांसते इत्यत्राप्युक्तदिशैवान्वयः। पाकं चिकीर्षति ओदनं बुभुक्षते इत्यादाविच्छैव सनोऽर्थः तस्याञ्च द्वितीयान्तेन लभ्यस्य पाकादिविशेष्यताकत्वस्य स्वरूपसम्बन्धेन धात्वर्थस्य तु कृत्यादेः स्वसाध्यत्वादिप्रकारनिष्ठस्वसमानकर्तृ-कत्वसम्बन्धेनान्वयात् पाकधर्मिका निरुक्तसम्बन्धेन कृतिमती या इच्छा तद्वानित्यादिरर्थः समानकर्तृत्वस्य निवेशात् अन्य-दीयकृतिपाकादाविच्छावत्ययं चिकीर्षति पिपक्षति इत्या-दिको न प्रयोगः इति चिन्तामणिकृतः। सोन्दडस्तु पाकं चिकीर्षतीत्यादौ द्वितीयार्थस्य विषयत्वस्य मूलधात्वर्थ एवा-न्वयः तदर्थस्य तु समानकर्तृकत्वविषयत्वाभ्यां सनर्थेच्छायां तथाच पाकविषयताककृतिसमानकर्तृकतद्गोचरेच्छावान् इत्यादिरेवार्थः कारकविभक्तेः क्रियायामेव स्वार्थबोधकत्वादत-एव गृहं तिष्ठासतीत्यादिको न प्रयोगः स्थितेर्गृहकर्मकत्व-बाधात् अन्यथा गृहधर्मिकां स्थितिप्रकारकेच्छां बोधयन्नयमेव प्रमाणं स्यात् न तु गृहे तिष्ठासतीत्यादिरिति प्राह। चिकी-र्षादेः प्रवृत्त्यादिरूपेष्टसाधनत्वेन तद्गोचरेच्छासत्त्वेऽपीच्छार्थक-सनन्तात् न सन्प्रत्ययः सनन्तान्न सनिष्यते इत्यनुशिष्टेरत-श्चिकीर्षिषतीत्यादिको न प्रयोगः पापच्यते इत्यादौ यङः पौनःपुन्यमर्थः तच्च प्रकृतधात्वर्थजातीय क्रियोत्तरतादृशक्रिया-नन्तर्य्यरूपं प्रकृत्यर्थे विशेषणत्वेनान्वेति तेन पाकोत्तरपाका-नन्तर्य्यवत् पाककर्त्ता इत्येवं तत्र वाक्यार्थः द्विः पक्तरि पुनः पक्तृत्वेऽपि न निरुक्तं पुनः पुनः पक्तृत्वम् अतो न तत्र पाप-च्यते इति प्रयोगः पाकोत्तरत्वादिकञ्च तत्समानकर्तृत्वगर्भं बोध्यम् अतः पुरुषान्तरीय पाकाद्युत्तरत्वमादाय नातिप्रसङ्गः। तण्डुलं पापच्यते इत्यादौ यङन्तधातूपस्थाप्ये सर्वत्रैव पाकादौ

तण्डुलकर्मत्वस्यान्वयो व्युत्पत्तिवैचित्र्यात् नातः क्रमेण मुद्गमाषौ पक्त्वा तण्डुलस्य पक्तरि तथाविधप्रयोगः तुषेण पापच्यते इत्यादौ कारकान्तरमप्येतेन व्याख्यातं जंगम्यते चंक्रम्यते इत्यादौ धात्वर्थगतं पौनःपुन्यमिव कौटिल्यमपि यङोऽर्थः गत्यर्थात् कौटिल्य एव तद्विधानात् तेन पुनः पुनः कुटिलगतिमान् इत्येवं तत्र बोधः शेषं पूर्ववत् । लोलुप्यते चंचूर्यते जंजप्यते दंदश्यते जेगिल्यते इत्यादौ निन्दितत्वमपि तेन पुनः पुनर्गर्हितं लुम्पति चरतीत्यादिकस्तत्रार्थः । अत्रोत्सर्गत एव एकाचो हलादेरेव धातोर्यङ्विधानात् पुनः पुनः कथयति जागर्त्ति दरिद्रातीत्याद्यर्थे कथ्यादेर्न यङ् नापि पुनः पुनरीर्ते एजते इत्यादाविन प्रभृतिः ऋप्रभृतिभ्यश्चेति विशेषविधेस्तु पुनः पुनरियर्त्ति अश्नाति अटतीत्याद्यर्थे अरार्य्यते अशाश्यते अाटाट्यते इत्यादिकः प्रयोगः शुभिरुचिभ्यां तु न स्यात् पुनः पुनः शोभते रोचते इत्यर्थे शोशुभ्यते इत्यादेर्निराकाङ्क्षत्वादिति वदन्ति ।

तद्धितं लक्षयति ।

विभक्त्यादिनिकादन्यः प्रत्ययस्तद्धितं मतम् ।
नानप्रकृतिको नैवमतिव्याप्त्यादिदोषतः ॥

विभक्तिधात्वंशकृद्भ्योऽन्यः प्रत्ययस्तद्धितं वृक्षक इत्यादौ ह्रस्वाद्यर्थकः कादिरपि तद्धितमेव तदन्यत्वेनापि प्रत्ययं विशेषयन्त्यन्ये नामप्रकृतिकप्रत्ययत्वन्तु न तद्धितस्य लक्षणं विभक्तौ क्यजादौ चातिव्याप्तेः पचतितरामित्यादौ तरामाद्यव्याप्तेश्च ।

विभजते ।

तस्यापत्यं तद्विशेषस्तद्दृष्टेन युतेन्दुमान् ।
कालस्तथा तेन रक्तं तस्य व्यूहोऽथ वेत्ति तत् ।

अधीते वा देवतास्य सैवमादीन् यथायथम्।
बोधयद्विधानर्थांस्तद्धितं स्यादनेकधा ॥

तस्यापत्यस्य विशेषो गुर्वायत्तत्वप्रथमत्वादिः ।

अपत्यार्थं व्याकुरुते ।

अण् नाम्नोऽपत्यसामान्ये षष्ठ्यन्ताद्बाधकं विना ।
अदन्तादिण् निषदादेरन्त्याचोऽक चेष्यमीरितम् ॥

षष्ठ्यन्तान्नाम्नः साक्षात्परम्परासाधारणापत्यसामान्ये बोध्ये अण् इत्युत्सर्गः स च मरीचेरपत्यं मारीचः काश्यपिरित्यादौ अपत्यविशेषभाने तु तद्धितभेदो वक्ष्यते मरीचिना अपत्यमित्यर्थे तु न षष्ठ्यन्तं नाम। अणो बाधकमाह अदन्तादिति अदन्तान्नाम्नो बाधकं विना इणेव दक्षस्यापत्यं दाक्षिः अस्यापत्यमिः इत्यादौ तत्रापि निषादादेरिणा अपत्यबोधने तदन्त्याचोऽगादेशोऽपेक्षितः यथा नैषादकिः वैयासकिः चाण्डालकिरित्यादौ ।

इणोऽपवादमाह ।

शिवादिभ्यस्त्वणेव स्यात् ञ्यो गर्गादिगणात्तथा ।
कुञ्जादेरायनण् ञ्यश्च तस्मान्नैष स्त्रियामिति ॥

शिववरुणककुत्स्थपुत्रप्रभृतिभ्योऽणेव नत्वदन्तादिण् मुनिषु वशिष्ठादिष्वृष्णिषु वसुदेवादिः कुरुषु नकुलादिश्च शिवादौ पाठ्यः तेन वाशिष्ठो वासुदेवः साहदेवः नाकुल इत्यादिरेव तत्र प्रयोगः शतानीकस्तु नाकुलिरित्यादौ क्वचिदपवादविषयेऽप्युत्सर्गविधिः प्रथमापत्यं वा तत्रार्थः। गर्गस्यापत्यमित्यर्थे गर्गादिगणात् ञ्यः यथा गार्ग्यः काव्यः वात्स्यः पाराशर्य्यः कार्त्तवीर्य्यः जामदग्न्यः इत्यादौ अत्र गणादित्युक्ते गर्गो नाम कश्चित् तस्यापत्यमित्यर्थे गार्गिरित्येव एवमग्रेऽपि।

कुञ्जादेर्गणादपत्यसामान्ये आयनण् तदुत्तरं ञ्यश्चास्त्रियां यथा कौञ्जायन्यः ब्राध्नायन्यः इत्यादौ स्त्रियान्तु कौञ्जायनीत्येव न तु ततोऽण्यः सुमङ्गलादित्वात् ङीप्। अत्रास्त्रियामित्यत्र बहुत्वस्याप्युपलक्षकं तेन कौञ्जायनाः पुमांस इत्यत्रापि न ञ्यः। गार्गिः कौञ्जिरित्यादौ नापत्यत्वेन बोधः किन्तु प्रथमापत्यत्वेनेति वक्ष्यते।

अदन्ताच्छिल्पिनो ण्योवा सेनान्ताल्लक्षणादपि ।
नड़ादेर्णायनो नित्यं याह्वादेस्त्विण् विधीयते ॥

तान्तवाय्यस्तान्तवायिः कौम्भकार्य्यः कौम्भकारिरित्यादौ शिल्पिवाचकात् माहासैन्यो माहासैनिरित्यादौ च सेनान्तात् लाक्षण्यो लाक्षणिरित्यादौ लक्षणशब्दादिणि प्राप्ते विभाषया ण्यः तथा नड़ादेर्णायनो नित्यं तेन नाड़ायनः चारायण इत्यादौ कुञ्जाद्यन्तर्गतो नड़ादिः बाह्वादेस्त्विण् यथा बाहोरपत्यं बाहविः सुमित्राप्रभृतयस्तु बाह्वादिगणे द्रष्टव्याः।

अणोऽपवादान्तरमाह।

स्त्रीप्रत्ययान्तादत्र्यादेरप्येयण् परिभाषिकात् ।
न नदीमानुषीनाम्न आदावाद्वृद्धिवर्जितात् ॥

विनतायाः सौपर्ण्याः कमण्डल्वाः युवत्या वाऽपत्यमित्यर्थे वैनतेयः सौपर्णेयः कामण्डलेयः यौवतेय इत्यादौ स्त्रीप्रत्ययान्तादेयसेव नत्वण् अत्रेरपत्यमित्यर्थे आत्रेयः अत्रिपदमप्रत्ययेदन्तद्विस्वरनाम्नि पारिभाषिकं तेन शौचेयः हारेयः आग्नेयः इत्यादिकः प्रयोगः। विध्यादिकं द्विस्वरमपि नापत्यसे दत्तं मरीच्यादिकमप्रत्ययेदन्तमपि न द्विस्वरमतो वैधोमारीच इत्यादौ न प्रसङ्गः स्त्रीप्रत्ययान्तादप्यादावाद्वृद्धिवर्जितात् नदीमानुषीनाम्नोनैयण् यथा यामुनः सैप्रः सारस्वतः इत्यादौ यथा वा सौभद्रः कौशल्य इत्यादौ आदावाद्वृद्धिमतस्तु

तादृशनाम्नो यथा प्राप्तमेयश्चेव यथा जाह्नवेयः द्रौपदेयः कौश-लेयः इत्यादौ ।

तथा ।

सुभगादेरिनादेशोऽप्यन्तस्यैयणि नित्यशः ।
कुलटाया विकल्पेन सती यदि भवत्यसौ ॥

सुभगाप्रभृतेरेयणन्तस्वरस्य नित्यमिनादेशो यथा सुभगाया अपत्यमित्यर्थे सौभागिनेयः दौर्भागिनेय पारस्त्रैणेय इत्यादौ सौहार्दवदिहोभयपदस्य वृद्धिः। सुभगा दुर्भगा चैव परस्त्री वन्धकी तथा। मध्यमा च कनिष्ठा चेत्यादिकः सुभगागणः। कुलटा तु यदि सती तदा तदन्तस्वरस्यैयणि विभाषया इना-देशो यथा कौलटिनेयः कौलटेय इत्यादौ यदि त्वसती तदा कौलटेय इत्येव प्रयोगः।

तथा ।

शीलेनाङ्गेन वा हीनात् स्त्रियामादादितस्तु वा ।
एरण् स्याच्चटकायास्तु नित्यमेरण् स्त्रियान्तु लुक् ॥

शीलेन हीनानां दास्यादीनाम् अङ्गेन हीनानां काणादी-नाञ्च स्त्रीप्रत्ययान्तानामेरण् वा स्यात् यथा दास्या अपत्यं दासेयः दासेरः यथावा काणाया अपत्यं काणेयः काणेरः कुलटाप्यङ्गहीना चेत् कौलटेर इति चटकायास्त्वपत्यमित्यर्थे नित्यमेरण् नत्वेयणपि यथा चाटकेरः चटकास्त्र्यापत्ये तु तस्य लुक् तेन चटकेत्येव तत्र प्रयोगः।

तथा ।

तिकादेरायनिण् नित्यं तदादेस्तु विभाषया ।
ईयः स्वसुः स च व्यस्य भ्रातुर्व्यः श्वशुराद्यवेत् ॥

तिकस्यापत्यमित्यर्थे नित्यमायनिण् यथा तैकायनिः कौश-ल्यायनिरित्यादौ कौशल्यायनिवल्लभामिति भट्टिः। स च तदादेः

सर्वनाम्नो वैकल्पिकः यथा तस्यापत्यमित्याद्यर्थे तादायनिः ताद-
यादायनिः याद इत्यादौ स्वसुरपत्यमित्यर्थे स्वस्रीयः भ्रातुर-
पत्यमित्यर्थे भ्रात्रीयः भ्रातृव्यः इ ष्टरि तु भ्रातृव्यशब्दो रूढ़
एव तदुक्तं भ्रातृव्यौ भ्रातृजद्विषाविति श्वशुरस्यापत्यमित्यर्थे
यः श्वशुर्य्यः ।

तथा ।

कुलाद्य एयकणीनः सपूर्व्वात् केवलादपि ।
महाकुलादणीनञ् च दुष्कुलादेयणो विधिः ॥

कुलस्यापत्यमित्यर्थे यः एयकण् च स्यात् यथा कुल्यः
कौलेयकः सपूर्वात् केवलाच्च कुलादीनः स्यात् यथा आढ्य-
कुलीनः कुलीन इत्यादौ महाकुलादण् ईनञ् च स्यात् यथा
माहाकुलो माहाकुलीनः दुष्कुलादेयण् यथा दौष्कुलेयः ।
केनापि दौष्कुलेयेन कुल्यां माहाकुलीं प्रियाम् । हृतां महा-
कुलीनस्य तस्य लिप्सामहे वयमिति भट्टिः । कथं महा-
कुलीनो दुष्कुलीनः सपूर्वादीन् महदादेः कुलीनेनान्वय
इत्यन्ये ।

देशक्षत्रिययो रूढ़ाद्राजापत्येऽप्यणो विधिः ।
नादेः कुरोः कोशलाच्च ण्यस्तथेदन्ततोऽप्यसौ ॥

देशे क्षत्रिये च शक्तान्नाम्नो राजन्यपत्यार्थे अणोविधिः
यथा पञ्चालानां राजापत्यं वा इत्यर्थे पाञ्चालः एवं वैदेहः एवं
ऐक्ष्वाकः । क्वचिदणादावप्युवर्णस्य लोपः नकारादेरुक्तरूढ़ात्
कुरुतः कोशलाच्च तादृशार्थे ण्यएव यथा नैषध्यः कौरव्यः
कौशल्यः इत्यादौ । कथं हिरण्मयं हंसमबोधि नैषधः परि-
रेभिरे कुकुरकौरवस्त्रिय इति यदि तस्येदमित्यण् । इदन्ता-
दप्युक्तरूढ़ात् ण्यः यथा कौन्त्यः आवन्त्यः इत्यादौ कथं
कौन्तेयः कुन्तीशब्दात् स्त्रीप्रत्ययान्तात् एयण् । स्त्रियाम्

कुन्त्यवन्तिकुरुभ्यो ण्यस्य लुगेव यथा कुन्तीनां स्त्र्यपत्यमित्यर्थे कुन्ती एवमवन्ती कुरुः। काम्बोजादेरपि रूढ़ादपत्ये राजनि च विहितस्याणो लुगेव यथा काम्बोजानामपत्यं राजा वा इत्यर्थे काम्बोजश्चोलः केरल इत्यादौ।

संख्यासंभद्रपूर्वाया ङ् रणमातुः स्त्रियाञ्च ङीप्।
गोर्यो ण्यन्तु यमादित्यादितिभ्यः स्याद्दितेरपि॥

द्वयोर्मात्रोरपत्यमित्यर्थे द्वैमातुरः त्रैमातुरः षाण्मातुरः शक्तिधरः कुमार इत्यमरः षाण्मातुरः भाद्रमातुरः स्त्रियान्तु तदन्तात् ङीप् द्वैमातुरीत्यादि गोरपत्यमित्यर्थे य एव गव्यो वत्सः। एवं यमस्यापत्यं याम्यः आदित्यस्यापत्यमादित्यः अदितेरपत्यमित्यर्थे आदित्यः दितेरपत्यं दैत्य इत्यादौ ण्यएव कथमादितेयः दैतेयः आदितिदितिभ्यां स्त्रीप्रत्ययान्तत्वादेयण्।

अपत्यम्।

नापत्यप्रत्ययान्तात् स्यादपत्यप्रत्ययः पुनः।
गुर्वायत्ते त्वपत्ये स्यात् पुनर्यूनीति तद्विधेः॥

उपगोरपत्यस्यापत्यमित्यर्थे औपगवादिपदेभ्यो नापत्यः प्रत्ययः अतएव एकोगोत्रे इति पाणिनिरप्याह एकः केवलोऽपत्यप्रत्ययं विना कृतएव शब्दो गोत्रेऽपत्यसामान्ये विहितप्रत्ययस्य साकाङ्क्ष इति तदर्थः पुनर्यूनीति विध्यन्तरसत्त्वादेव चौपगवस्य गुर्वायत्तापत्यमित्यर्थे औपगविः गार्ग्यायण इत्यादौ पुनरपत्यप्रत्ययः गुर्वायत्तं यत् प्रशस्तं तदपत्यं युवोच्यते इति वृद्धाः।

ण्यान्तेयन्तादायनण स्यात् कौञ्जायन्यादिवर्जितात्।
गुर्वायत्ते केवलाच्च द्रोणादेष विभाषया॥

ण्यान्तादिणन्ताच्च गुर्वायत्तापत्यस्य बोधने आयनण् स्यात् यथा गार्ग्यस्य गुर्वायत्तापत्यमित्यर्थे गार्ग्यायणः वात्स्यायनः

दाचायण इत्यादौ । स्यान्तादपि कुञ्जादिगणान्नासौ तेन तव कौञ्जायन्योऽयमित्यादिरेव प्रयोगः । केवलादपत्यप्रत्ययशून्यादपि द्रोणादायनण् यथा द्रोणस्य प्रशस्तापत्यं द्रौणायनोऽश्वत्थामा विभाषयेत्युक्तेः पक्षे द्रौणिरित्येव ।

गर्गादेरपि कुञ्जादेः प्रथमापत्यबोधने ।
इञेव स्यान्न तु ष्यः स्यान्नायनण् स्यादिति स्थितिः ।

गर्गस्य प्रथमापत्यमित्यर्थे गार्गिर्वात्सिरित्यादौ न ष्यः किन्त्विञेव तथा कुञ्जस्य प्रथमापत्यमित्यर्थे कौञ्जिर्मौञ्जिरित्यादावपि नायनण् ।

अपत्यविशेषः ।

तद्युक्तेणेन्दुमत्काले तन्नक्षत्रादणोविधिः ।
नक्षत्रद्वन्द्वतस्त्वौ यः कथितार्थे विधीयते ॥

पुष्येण सहेन्दुमदित्यर्थे पौषं दिनं पौषी रात्रिः एवमाश्विनं श्रावणं कार्त्तिकमित्यादौ । तद्युक्तेणेन्दुमत्काल इत्येव नातः पुष्येण सहेन्दुमत् पुरमित्यर्थे पौषं पुरमित्यादिकप्रयोगः नक्षत्रद्वन्द्वात् कथितार्थे अणो बाधक ईय एव यथा पुष्यपुनर्वसुभ्यां सहेन्दुमद्दिनं पुष्यपुनर्वसवीयम् एवमश्विनीभरणीया रात्रिरित्यादिप्रयोगः ।

नक्षत्रेण युतेन्दुमत् ।

तद्रागयुक्तमित्यर्थे तस्मादण् स्यादिकण् पुनः ।
लाक्षातो रोचनातश्च शकलात्कर्दमात् स वा ॥

हरिद्राया रागयुक्तमित्यर्थेऽण् यथा हारिद्रं वासः एवं कौसुम्भं लाक्षया रक्तमित्यर्थे नित्यमिकण् यथा लाक्षिकं रोचनिकं शकलकर्दमाभ्यां तेन रक्तमित्यर्थे विभाषयेकण् यथा शाकलिकः शाकलः कार्दमिकः कार्दमः इत्यादौ ।

तथा ।

नीलादः कस्तथा पीतात् विलिङ्गादपि नित्यशः ।
स्वभावरक्ते गौण्या तु वृत्त्या तद्धितमुच्यते ॥

नीलेन नील्या वा रक्तमित्यर्थे नित्यप्रत्ययो यथा नीलः पट इत्यादौ पीतेन पीतया वा रक्तमित्यर्थे तु नित्यं कप्रत्ययो यथा पीतकः पट इत्यादौ हारिद्रः कुक्कुटपादः लाक्षिकमधरं पीतकं स्वर्णमित्यादौ स्वभावसिद्धपीतादौ गौणवृत्त्या हरिद्राद्ये रक्तसदृशे तद्धितं प्रयुज्यते ।

तेन रक्तम् ।

तेषां समूह इत्यर्थेऽप्यण् पाशादेस्तु यः स्त्रियाम् ।
गर्गादिगोत्रादुक्षादेश्चाकञ्वीयस्तु वाश्वतः ॥

काकानां समूहः काकम् एवं शुकानां समूहः शौकं भिक्षाणां समूहः भैक्षं युवतीनां समूह इत्यर्थे यौवतमिति जयादित्यः । तद्धितानपत्यस्वरे पुंवद्भावात् यौवनमिति तु भागवृत्तिः अतएव यमुपास्ते पुण्यभाजं कलाकुशलयौवनम् । सरसं नित्यश-स्तन्वि सफलं तस्य यौवनमिति तन्मते प्रयोगः । पाशानां समूह इत्याद्यर्थे तु तेभ्यो यएव तदन्तस्य स्त्रीलिङ्ग एव यथा पाश्या धूल्या वात्या वन्या शस्त्येति खलरथावपि पाशादौ पठन्ति यथा खल्या रथ्या इति । तथा गर्गादिगोत्रेभ्यः समूहेऽकण् गार्गकं दाक्षकमित्यादौ उक्ष्णां समूह इत्यर्थेऽप्यसौ यथा औक्षकम् औष्ट्रकमित्यादौ । उक्षोष्ट्रोरभ्रवत्साजा राजा राजान्यकस्तथा । राजपुत्रो मनुष्यश्च वृद्ध उक्षादिको गणः । अश्वानां समूहे त्वीयो विभाषया यथा अश्वीयमाश्वमिति ।

धेनोरनञः कण् नित्यं केदाराद्यश्चिकण्वकण् ।
पिष्टात् कणनिहस्तिभ्यश्चैकण् केशादिकण् यणौ ।

धेनूनां समूहो धैनुकम् अधेनोस्त्वाधेनवमित्यत्रैव अस्मा-

देवानञ इति निषिधात् सामूहिकप्रत्ययेषु तदन्तविधिरेष्टव्यः तेन सुन्दरगर्गाणां समूह इत्यर्थे सौन्दरगर्गकमित्यादि साध्विति शाब्दिकाः। केदाराणां समूह इत्यर्थे यणि कैदार्यम् ठकणि कैदारिकम् अकणि कैदारकम् इति त्रिधा प्रयोगः। पिष्टार्थकात् कवचितो हस्तितश्चैकण् यथा पूपानां समूहः पौपिकं शाष्कुलिकं तथा कवचिनां समूहः कावचिकं हस्तिनां हस्तिनीनां वा समूहो हास्तिकम्। केशानां समूहे त्विकण् यण् च कैशिकं कैश्यम्।

इनिः खलोलूकपद्माद्रथात् कह्यः स्त्रियामिमौ।
गणिकातो ब्राह्मणाच्च मानवाद्वाडवाच्च यण्॥

खलादिभ्यिकादिन्निः समूहे यथा खलिनी उलूकिनी पद्मिनी। तथा रथात् कड्यः यथा रथकड्येति इमौ च प्रत्ययौ स्त्रियामेव। गणिकादिभ्यस्तु समूहे यण् यथा गाणिक्यं ब्राह्मण्यं मानव्यं बाडव्यमिति।

गजबन्धुजनग्रामसहायेभ्यस्तु तः स्त्रियाम्।
पृष्टाद्यत क्लीवलिङ्गं तत् चरणेभ्यस्तु धर्मवत्।

गजता बन्धुता जनता सहायता इत्यत्र गजादीनां समूहेऽर्थे तप्रत्ययः स च स्त्रीलिङ्ग एव। पृष्ठात् समूहे यत् यथा पृष्ठ्यं तच्च क्लीवलिङ्गमेव अतएवास्य पाशादिषु अनन्तर्भावः चरणेभ्यस्तु समूहे धर्मे इव प्रत्ययाः स्युः यथा कठानां धर्मः काठकं तथा समूहोऽपि एवं छान्दोग्यमाथर्वणमित्यादि।

ततसमूहः।

तद्वेत्ति तदधीते वेत्यर्थेऽप्यण् क्रतुवाचिनः।
सूत्रान्तादप्यकल्पादेरक्थादेश्चेकणो विधिः॥

निमित्तं वेत्तीत्यर्थे नैमित्तः एवमौत्पातः मौहूर्त्तः छन्दो

वेत्त्यधीते वेत्यर्थे छान्दस: वैयाकरण: क्रतुवाचिनोऽग्निष्टोमादेस्त्विकण् यथा अग्निष्टोमं वेत्ति अधीते वा आग्निष्टोमिक: अक्रत्वादे: सूत्रान्तशब्दादप्युक्तार्थे इकण् यथा वार्त्तिकसूत्रिक: सांख्यसूत्रिक: कल्पादेस्तु सूत्रात् काल्पसूत्र इत्यणेव। उक्थं वेत्त्यधीते वा इत्यर्थेऽप्यौक्थिक: नैयायिक: पातञ्जलिक: लोकायतं बौद्धशास्त्रं तद्वेत्त्यधीते वा लौकायतिक इत्यादि।

विद्यान्तादङ्गधर्मक्षत्रत्रानुत्तरवर्त्तिन:।
तथैकण् शतषष्टिभ्यां परस्य तु पथष्टिक:॥

वायसविद्यां वेत्त्यधीते वा वायसविद्यिक: सर्पविद्यिक: चारविद्यिक:। अङ्गाद्यनुत्तरवर्त्तिन: किम् आङ्गविद्य: ज्योतिर्विद्य: गान्धर्वविद्य: धार्मविद्य: क्षात्रविद्य: त्रयवयवा विद्या त्रिविद्या तां वेत्ति अधीते वा त्रैविद्य इति कर्मधारयादण्। त्रैविद्या मां सोमपा: पूतपापा इति गीता। तिस्रो विद्या वेत्तीत्याद्यर्थे तु द्विगुतस्तद्धितस्य लुकि त्रिविद्य इत्येवम्। शतपथं षष्टिपथं वेत्तीत्याद्यर्थे ठिक: शतपथिक: षष्टिपथिक: स्त्रियान्तु शतपथिकीत्यादि।

क्रमादिभ्य: कएव स्यात् पदात् क: स्वादिकस्तथा।
सर्वादेरथ साद्यादेर्वेत्तीत्याद्यर्थकस्य लुक्॥

क्रमं वेत्तीत्याद्यर्थे क्रमादिभ्य: कएव यथा क्रमक: सामक: शिक्षक: मीमांसक इत्यादौ। पदात्तु क: स्वादिकोऽपि यथा पदक: पदिक:। सर्वादे: साद्यादेश्च शब्दाद्विहितस्य वेत्यधीते वेत्यर्थकस्य तद्धितस्य लुगेव यथा सर्वं वेदं वेत्तीत्याद्यर्थे विहितस्याण् प्रभृते: सर्ववेद: सर्वतन्त्र इत्यादौ सादिवार्त्तिक इत्यादौ चेति।

अष्टाध्यायादित: क: स्यादध्यायस्य च लुक् तथा।
अध्यायसंख्यार्थकात्काद्वेत्त्याद्यर्थस्य लुक परे॥

अष्टावध्यायां यस्य तदष्टाध्यायसूत्रं तद्वेत्ति अधीते वेत्यर्थे कः अध्याय पदस्य च लुक् यथाष्टकाः पाणिनीयाः पञ्चकाः गौतमीयाः दशकाः व्याघ्रपदीयाः जैमिनीयाः परे पुनरष्टाव-ध्यायसंख्या यस्य इत्यर्थे कप्रत्ययं कृत्वा तद्वेत्त्याद्यर्थकस्य तद्धि-तस्य लोपमाहुः ।

तद्वेत्त्यधीते वा ।

तस्येदमिति सम्बन्धिन्यपि तस्मादणो विधिः ।
स्वराजपरदेवेभ्यः कादिरीयोजनादपि ॥

तस्येदमित्येवं तत्सम्बन्धिन्यर्थे तदर्थकादण् इत्युत्सर्गः यथा वृत्तस्येदं वात्तं एवं दार्शदमित्यादि । स्वस्येदमित्याद्यर्थे तु स्वराजादिभ्यः कादिरीयो यथा स्वकीयं राजकीयं परकीयं देवकीयं जनकीयमिति । स्वतः कस्यानित्यत्वम् अतएव स्वीयं यदन्यभिन्नं पदमिति मणिदीधितिरिति वदन्ति ।

ईयस्त्यदादेर्भवतस्तव तीद इत्यपि ।
परावरादितोऽप्यर्द्धात् यदिकण्णपि दिक्परात् ॥

त्यस्येदमित्याद्यर्थे त्यदादिगणादीयः यथा त्यदीयं तदीयं मदीयं इदमीयमित्यादि । भवतस्तु त्यदादेरीये परतः तस्य दादेशोऽपि यथा भवदीयं नये स्वरे तद्धित इति पदान्तविधे-र्निषेधादस्य विधिः । प्रत्यन्तस्य तु भवतस्तस्येदमित्यर्थे भाव-तमित्यणेव । पराद्युत्तरवर्त्तिनोऽर्द्धादपि न केवलाच्च तस्मात् पराद्वस्येदमित्यर्थे यदेव । यथा परार्द्ध्यं अवरार्द्ध्यं आर्द्ध्यं आदिपदात् उत्तरार्द्ध्यं अधमार्द्ध्यं दिग्वाचिपूर्वकात् पुनरर्द्धात् यदिकणपि यथा पूर्वार्द्ध्यं पौर्वार्द्धिकं दक्षिणार्द्ध्यं दाक्षिणा-र्द्धिकमित्यादि ।

युष्मास्मास्माकभावान्ते वाणीनण् युष्मदस्मदोः ।
तवेत्यस्मान्ममेत्यस्मादणीनञ्चपि कादिभः ॥

युवयोर्युष्माकं वा इदं आवयोरस्माकं वा इदमित्यर्थे युष्मदस्मदोर्युष्माकास्माकभावोत्तरमणीनण् च वा स्यात् यथा यौष्माकम् यौष्माकीणम् आस्माकम् आस्माकीनम् । आस्माकदन्तिमाविध्यवामनोभूतभूरुहः । पक्षे त्यदादित्वादीयो यथा युष्मदीयमस्मदीयमिति । तवेदं ममेदमित्यर्थे तवममेत्यनयोरणीनमपि कादिकः स्यात् यथा तावकं तावकीनं स्वरूपनिर्देशः न त्वदादेशः । अपिना त्यदादित्वादीयोऽपि यथा त्वदीयं मदीयमिति ।

कखारण्याद्धस्तिवर्त्म विहाराध्यायमानुषे ।
नित्यं वा गोमयेऽन्यत्र णः सदा स्यादिति स्थितिः ॥

अरण्यस्यायं हस्तीत्याद्यर्थे अरण्यान्नित्यं कण् यथा आरण्यकः करी पन्था विहारो मानुषश्च अध्यायस्त्वरण्यगीतत्वादारण्यकः । गोमये त्वरण्यस्येदमित्यर्थे आरण्यकमारण्यं वा गोमयमिति द्विधा प्रयोगः । कथितेभ्योऽन्यस्मिन्नर्थेऽरण्यान्नित्यं णप्रत्यय एव यथा अरण्यस्येयमित्यर्थे आरण्या लता आरण्यः पशुरित्यादि

तस्येदम् ।

अण् तत्र भव इत्यर्थे पदादृतुवर्गतो भवेत् ।
ग्रीवात एयण् वा तत्र ग्रैवं ग्रैवेयमित्यपि ॥

भव इत्यस्य उत्पत्तिवर्त्तमानत्वे ह्यर्थौ यथायथम् ।

आदेर्मध्यात्तथाग्रार्थे मोऽधसः सस्य लुक् तथा ।
डिमोऽप्यपश्चादन्तेभ्यः कालार्थात्तु पदादिकण् ॥

आदौ भवः आदिमः भवो वर्त्तमान इति वर्द्धमानवृत्तिः । मणिर्विराजते तन्वि तवायं हारमध्यमः । अधो भव इत्यर्थेऽधसः सलोपादधमः । यदङ्गमधमं तस्य स्पर्शनं दुरितावहमिति स्मृतिः । अग्रे भव इत्यर्थे डिमः अग्रिमः एवं पश्चिमः अन्तिमः

कालार्थकान्मासादिशब्दात्तु तत्र भव इत्यर्थे इकण् यथा मासिकं सांवत्सरिकं मौहूर्त्तिकं पौर्वाह्णिकं आपराह्णिकमित्यादि।

शरदः श्राद्धएवायं वा तु रोगे तथातपे।
निशातश्च प्रदोषाच्च वायं तादिस्तथा श्वसः॥

अयमिकण्प्रत्ययः तथार्थे शरच्छब्दात् श्राद्ध एव साकाङ्क्षः यथा शारदिकं श्राद्धम्। अन्यत्र शारदश्चन्द्रमाः। रोगातपयोस्तु अर्थयोरयं वैकल्पिकः यथा शारदः शारदिको ज्वरः आतपश्च। निशायां प्रदोषे वा भव इत्यर्थे नैशिकं नैशं वा प्रादोषिकं प्रादोषं वा तम इत्यादि। श्वसः श्वःपदात्तु तादिरयमिकण्प्रत्ययस्तथा विकल्पेनेत्यर्थः तेन श्वोभवमित्यर्थे शौवस्तिकं धनम्। शौवस्तिकत्वं विभवा न येषां व्रजन्ति तेषां दयसे न कस्मादिति भट्टिः। पक्षे श्वस्त्यं श्वस्तनमिति त्यतनौ वक्ष्येते।

सन्ध्यादेश्च तुनक्षत्रभेदाच्चाण् फले पुनः।
संवत्सरात् पर्वणि च प्रावृषश्चैण्यमीरितम्॥

सन्ध्यादिगणात्तत्र भवमित्यर्थे अणेव यथा सान्ध्यं सन्धिवेलं आमावस्यं त्रयोदशं चातुर्दशं पाञ्चदशं पौर्णमासं प्रातिपदं वा तमः इति अत्र ऋतुभेदो ग्रीष्मादिः तस्मात्तत्र भवमित्यर्थे ग्रैष्मं शैशिरं तदन्तविधिना पूर्वग्रैष्मम् अवयवादृतूनामित्युत्तरस्य वृद्धिः। नक्षत्रभेदात्तु पुष्ये भवं पौषं श्रौषधं तैषं रौहिणमित्यादि। संवत्सरात्तु फले पर्वणि च भवार्थेऽण्सेव यथा सांवत्सरं फलं पर्व वा अन्यत्र तु कालार्थत्वादिकण् यथा सांवत्सरिकं कर्म प्रावृषि भव इत्यर्थे एण्यः यथा प्रावृषेण्यं वनम्। प्रावृषेण्यं पयोवाहमिति रघुकाव्यम्।

वर्षातः स्वादिकण् हेमन्तादणप्यत्र वा तलुक।
सायं चिरं प्रगे प्राह्णे कालार्थाव्ययतस्तनट॥

वर्षासु भवं वार्षिकं तृणम्। हेमन्ताद्भवार्थे यथेकण् तथा अणपि परन्त्वणि तकारस्य वा लुक् तेन हैमन्तिकं हैमनं हैमन्तमिति त्रिविधप्रयोगः। तदन्तविधिना पूर्वहैमनमित्यादि-रपि प्रयोगः। सायमादिभ्यस्तु सायन्तनं चिरन्तनं प्रगेतनं प्राह्णेतनं दिवातनं दोषातनमित्यादौ भवार्थे तनट् टानु-बन्धत्वात् सायन्तनी तिथिः।

परुतश्च परारेश्च चिराच्च नो विभाषया।
पुराशब्दात्तथा नो वा मध्यात्प्रादेश्च वा तनट्॥

परुत्नं परारित्नं चिरत्नं पक्षे परुत्तनं परारितनं चिरतनं पुरा शब्दादपि भवार्थे वा नः तेन पुराणं पुरातनमिति।

तदापन्नान्तु कालात् स्यादिकण् ङीप् वा स्त्रियां ततः।
मनुष्ये पर्वतादीयश्चीयोऽन्यत्र विभाषया॥

तत्काले भवमित्यर्थे तत्कालशब्दादिकण् तात्कालिको बोधः एव सापत्कालिकः तदन्तस्य स्त्रियां वा ङीप् यथा तात्कालिकी तात्कालिका मतिरित्यादौ। पर्वते भवो मनुष्य इत्यर्थे पर्वतादीयण् पार्वतीयो नरः ततोऽन्यत्र तु पर्वतीयं पार्वतं वा फलमित्यादावण्यपि।

दिगादिभ्यो यदेव स्याच्छरीरावयवादपि।
दृतिवस्त्यस्थिकुक्षिभ्य एयण् स्यात् कलसादढ्ः॥

दिशि भवमित्यर्थे दिश्यम् एवमाद्यम् अन्त्यं रहस्यं दिव्यं उदर्य्यं यूथ्यं वर्ग्यं दण्ड्यमित्यादौ यत्। शरीरावयवादपि यथा दन्ते भवमित्यर्थे दन्त्यम् एवं कण्ठ्यम् ओष्ठ्यं मूर्द्धन्यं मुख्यं जठर्य्यम् इत्यादौ। दृतौ भवमित्यर्थे तु दृत्यादेरेयणेव यथा दार्तेयं वास्तेयं आस्थेयं कौक्षेयम्। असिं कौक्षेयमुद्यस्य चक्रारापनसं मुखमिति भट्टिः। कालसेयम् आहेयति।

चतुर्मासादयश्च यश्चाव्ययीभावतस्तथा ।
अन्तःपूर्वादिकश्चैवं समानात्तत्परादपि ।

चतुर्मासेषु भवमित्यर्थे चातुर्मास्यं व्रतं चतुःपदस्याषाढादिचतुष्कत्वेन लक्षकत्वान्नात्र द्विगुरतः पञ्चकपालस्येत्यत्रेव द्विगोस्तद्धितस्य न लुक्। यज्ञे तु चातुर्मासो यागः इत्यपेव अन्तःपूर्वादव्ययीभावाद्भवार्थे इकण् यथा आन्तर्दैहिकम् आन्तर्गणिकम्। अव्ययीभावादित्येव तेनान्तःकरणे भवमान्तःकरणं दुःखमित्यस्येव समानात्तत्पराच्च यथा समाने भवं सामानिकम्। सामानिकोऽयं युवयोः प्रयासः। समानदैशिकम्।

कायन्तवर्गादीयः स्याज्जिह्वामूलाङ्गुलादपि ।
मित्राद्युत्तरतो वर्गात् यदीनावीय एव च ॥

कवर्गे भवः कवर्गीयो वर्णः इतीयः। एवञ्चवर्गीयः टवर्गीयः इत्यादि। जिह्वामूलादङ्गुलाच्च जिह्वामूलीयः अङ्गुलीयः। मित्राद्युत्तरवर्गात् तु प्रत्ययत्रिकं यथा मित्रवर्गे भव इत्यर्थे मित्रवर्ग्यः मित्रवर्गीणः मित्रवर्गीयः इत्यादि।

स्त्रीपुंभ्यां नञ् स्नञौ तत्र भवे भावे तु वा तयोः ।
स्वरादौ तद्धिते प्राप्ते गोर्यदेव विधीयते ॥

स्त्रियां भवः स्त्रैणः। स्त्रैणेन नीता विकृतिं लघिम्ना इति भट्टिः। पुंसि भवः पौंस्नः। स्त्रियाः पुंसश्च भावेऽर्थे तु नञ् स्नञौ विकल्पेन स्याताम्। तेन स्त्रिया भावः स्त्रैणं स्त्रीत्वं पुंसो भावः पौंस्नं पुंस्त्वञ्च। गोपदात्तु यद्यदर्थे स्वरादितद्धितं प्रसक्तं तत्तदर्थे तदेव साकाङ्क्षं तेन गोरपत्यं गौर्देवता यस्य गवा चरति गोः समूह इत्याद्यर्थे गव्यमित्येव प्रयोगः। गोत्वं गोवदित्यादौ तु त्वादिको न स्वरादिः।

तत्र भवः।

ये भवार्थे यतः प्रोक्तास्तद्धितप्रत्ययाः पुरा ।
जातेऽर्थेऽपि ततस्ते स्युर्विशेषविधिना विना ॥

मथुरायां भवः इत्यर्थे इव मथुरायां जात इत्यर्थेऽप्यणो-ऽतिदेशः । एवं स्त्रैणः पौंस्नः ग्राम्यः ग्रामीणः इत्यादौ गणादे-रपि प्रावृष एण्य प्रामाविकः पदोषादेरिकणादिप्राप्तौ च कादि-र्विशेषविधेर्वक्ष्यते ।

प्रावृषस्तत्र जातेऽर्थे स्यादिकः शरदस्त्विकण् ।
संज्ञायां विहितः पूर्वाह्णापराह्णादितस्तु कः ॥

प्रावृषि जातमित्यर्थे प्रावृषिकं पत्रं प्रावृषिका वृष्टिः । शरदि जातमित्यर्थे तु संज्ञायामिकण् यथा शारदिकाः मुद्ग-प्रभेदाः शारदमन्नम् पूर्वाह्णे जातमित्यर्थे तु पूर्वाह्णादिभ्यः को यथा पूर्वाह्णकं अपराह्णकं मध्याह्नकमित्यादि एवमार्द्रायां मूलायां जातमित्यर्थे आर्द्रकं मूलकं मे समस्येति ह्रस्वः ।

अणकः स्यादमावास्याशब्दात्तद्धितातादपि ।
स्थानान्तादथ गोशालखरशालाच्च नित्यशः ॥
जातार्थकस्य लुग्वा तु वत्सशालादितो भवेत् ।

अमावास्यायां जात इत्यर्थेऽण् अकश्च स्यात् यथा आमा-वास्यः अमावास्यको बालकः । तद्धितातादमावास्याशब्दादपि यथा च आमावास्यः अमावास्याकः । स्थानान्ताद्विहितस्य जातार्थकतद्धितस्य नित्यं लुक् स्यात् यथा गोस्थाने जातमित्यर्थे गोस्थानं पत्रम् एवमश्वस्थानं शशस्थानमित्यादौ गोशालायां जातमित्यर्थे गोशालं खरशालम् इत्यत्राप्येवम् । नित्यममीषां क्लीवत्वं एभ्यो जातार्थस्य नित्यं लुग्विधानात् अश्विन्यादितो जातार्थकस्य वा लुगिति प्रतीयते । अतएव मघातोऽणो न लुग्भवेत् इत्यग्रे निषेधः सङ्गच्छते इति निबन्धकारः । वत्स-शालादितस्तु जातार्थस्य वा लुक् यथा वत्सशालायां जात

इत्यर्थे वत्सशालो वात्शालश्च वत्सः । एवमभिजित् आभिजितो वा बालकः । वत्सशालाभिजिच्चित्रा रेवती रोहिणी तथा । अश्वयुङ् मृगशीर्षश्च वत्सशालादिको गणः । मृगशिरसि भवं जातं वा इत्यर्थे तु न तद्धितमनभिधानात् ।

अनुराधा तिष्यपुष्यौ हस्तस्वाती पुनर्वसु ।
विशाखा बहुलेभ्यो नित्यं जातार्थकस्य लुक् ॥

अनुराधायां जातोऽनुराधः स्त्रीप्रत्ययस्य लुक् तद्धितलुकीति लुक् एवं तिष्यः पुष्यः हस्तः स्वातिः पुनर्वसुः विशाखो बहुलः कथं बाहुलेयस्तारकजिदिति बहुला कृत्तिका तत्र जात इति संज्ञायामीयण् ।

श्रविष्ठाषाढयोरीयण् उण् वा शतभिषक् पदात् ।

इति महामहोपाध्याय श्रीजगदीश-तर्कालङ्कार-भट्टाचार्य-विरचिता शब्दशक्तिप्रकाशिका समाप्ता ।

---

# ॥ भक्तिरसायनम् ॥

परमहंस परिव्राजकाचार्य्य विश्वेश्वरस-रस्वती श्रीपाद शिष्य
श्रीमन्मधुसूदन सरस्वती विरचितम्।

परमहंस परिव्राजकाचार्य्य पूज्यपाद श्रीमत्स्वामि प्रकाशानन्द-
सरस्वती-प्रवराशिष्येण

श्रीयुक्त नित्यस्वरूपब्रह्मचारिणा
सम्पादितम् प्रकाशितञ्च।

श्रीधाम नवद्वीपनिवासि सरस्वत्युपाधिक-
पण्डित श्रीयुक्त शचीनन्दन गोस्वामि भक्तिरत्नेन
संशोधितम्।

कलिकाता राजनगर्य्याम्
१४ नं रामतनु वसुलेनस्थ श्रीदेवकीनन्दन यन्त्रालये
श्रीयुक्त गणेशचन्द्र भट्टाचार्य्येण
मुद्रितम्।

॥ संवत् १९६९ ॥

॥ ॐ ॥

# समर्पण-पत्रम् ।

काशीमवाजाराधिपति-श्रीगौडराजर्षि-धर्म्मराज-माननीय
महाराज-श्रीयुक्त-मणीन्द्रचन्द्र-नान्दि-महोदय !

राजन् !

परिभ्रमन् पर्व्वतकन्दरे वहु
वहूटजेष्वार्य्यजनं विलोकयन् ।
अमन्दनन्दैर्नितरां हि नन्दितो
गतः कदानन्दिमुकुन्द-मन्दिरम् ॥

गतस्तु वृन्दावनमन्दिरे ततः
सदातनानन्द-विनन्दिते किल ।
विलोकयन् लोभन-केलिलाञ्छनं
गतः कदाचार्य्यगृहं मुदं गतः ॥

तेनाति विज्ञेन सुसत्कृत स्तदा
सुदर्शनाचार्य्यवरेण मादृशः ।
तत स्तदीयातिशयैर्दयालवैः
परीत एतन्मणिरत्नमीयिवान् ॥

स्वयं विशुद्धस्य मणेः कथञ्चन
न केन शुद्धिर्भविता सुसङ्गता ।
तथापि मुद्राङ्कनसंस्क्रियामलः
करोतु ते पाणितलीमलङ्कृताम् ॥

एतद् भक्तिरसायनं सुनिकषो भक्तेर्बुभुत्साविधौ
आदर्शोऽखिलशास्त्रसारचयने विश्वे यथा देहिनाम् ।
लोकेऽस्मिन्नतुलं विलोक्य नितरां त्वत्पाणिमेतत्तत-
स्त्वत्पाणौ निहितं यथापदमयत् सर्व्वं समुद्भासते ।

आशीराशंसिना—
श्रीनित्यस्वरूपब्रह्मचारिणा ।

सटीकम्

# भक्तिरसायनम् ।



## प्रथम उल्लासः ।

### साधनभूमिभक्तिसामान्य-निरूपणम् ।

पदनखनिविष्टमूर्त्तिरेकादशरूपतामिवावहन्निष्ठाम् ।
यं समुपास्ते गिरिशस्तं वन्दे नन्द-मन्दिरे कश्चित् ॥

ग्रन्थारम्भे सम्भावितविघ्न-निवारण-बुद्ध्या भगवदनुध्यानरूपं मङ्गलमङ्गीकुर्वन्नादौ प्रेक्षापूर्वकारिप्रवृत्त्यङ्गतयाभिधेय-प्रयोजन-सम्बन्धानाचष्टे शिष्टाग्रणी ग्रन्थकारः —

नवरसमिलितं वा केवलं वा पुमर्थं
परममिह मुकुन्दे भक्तियोगं वदन्ति ।
निरुपम-सुखसम्विद्रूपमस्पृष्टदुःखं
तमहमखिल-तुष्ट्यै शास्त्रदृष्ट्या व्यनज्मि ॥ १ ॥

कर्मयोगोऽष्टाङ्गयोगो ज्ञानयोगो भक्तियोग इति चत्वारः पुमर्थत्वेन प्रसिद्धा योगाः ।

योगास्त्रयो मया प्रोक्ता नृणां श्रेयोविधित्सया ।
ज्ञानं कर्म्म च भक्तिश्च नोपायोऽन्योऽस्ति कुत्रचित् ॥
[ भा० ११ । २० अ० ६ ]

इति भगवद्वचनेनाष्टाङ्गयोगोऽपि ज्ञानयोगान्तर्गतो द्रष्टव्यः ।

मन एकत्र संयुञ्ज्याज्जितश्वासो जितासनः ।
वैराग्याभ्यासयोगेन ध्रियमाणमतन्द्रितः ॥
[ भा० ११ स्क० । ६ अ० । ११ ]

इत्यादिना तस्यापि व्युत्पादनात्; तत्र गर्भाधान-पुंसवन-सीमन्तोन्नयन-जातकर्म्म-नामकरणान्नप्राशन-चौलोपनयनानि, चत्वारि च वेदव्रतानि, स्नानं सह धर्म्मचारिणा संयोगः, पञ्चानां यज्ञानामनुष्ठानं देव-पितृ-भूत-मनुष्य-ब्रह्मणामेतेषाञ्च 'अष्टकाद्यावर्णं श्राद्ध-श्रावण्याग्रहायणी-चैत्र्याश्वयुजी चे' ति सप्तपाक-यज्ञसंस्थाः । 'अग्न्याधेयमग्निहोत्रं दर्श-पौर्णमासौ चातुर्मास्यानि निरूढपशुवन्धः सौत्रामण्याग्रणी चे' ति सप्तहविर्यज्ञसंस्थाः । 'अग्निष्टोमोऽत्यग्निष्टोम उक्थः षोडशी बाजपेयोऽतिरात्राप्तोर्यामः' इति सप्तसोमसंस्था इत्यादिशास्त्रविहितो वर्णाश्रम-धर्म्मरूपः कर्म्मयोगान्तःकरणशुद्धिसाधनत्वेन तावत्पर्यन्तमनुष्ठेयः ॥

तावत् कर्म्माणि कुर्व्वीत न निर्विद्येत यावता ।
मत्कथा-श्रवणादौ वा श्रद्धा यावन्न जायते ॥
इतिभगवद्वचनात् । [ भा० ११ । २० अ० ६ ]

'निर्व्विण्णचित्तं ब्राह्मणं ब्रह्मिष्ठ गुरुमुपासीते'त्यादिश्रुतेश्च

अन्तःकरण-शुद्धिसाधनत्वं च तस्य 'धर्म्मेण पापमपनुदन्ति-तस्माद्धर्म्मं परमं वदन्ति' [ २२। १म०। उ० ] 'येन केन यज्ञेनापि वा दर्वि होमेनानुपहतमाना एवभवन्ती'त्यादिश्रुतिसिद्धम्। ततश्चाद्रुत-चित्तस्य निर्व्वेदपूर्वकं तत्त्वज्ञानं द्रुतचित्तस्य तु भगवत्कथा-श्रवणादिभाग वतद्धर्मश्रद्धापूर्व्विका भक्तिरित्यवधित्वेन द्वयमप्युपात्तम्, ततोऽन्तःकरणशुद्ध्याऽष्टाङ्गमनुष्ठाय तैलधारावदविच्छिन्नभगवदेकाकार प्रत्ययपरम्परात्मकैकाग्रतायोग्यं मनः सम्पादयेत् ।

यदारम्भेषु निर्व्विण्णो विरक्तः संयतेन्द्रियः ।
अभ्यासेनात्मनो योगी धारयेदचलं मनः ॥
धार्य्यमाणं मनो यर्हि भ्राम्यदाश्वनवस्थितम् ।
अतन्द्रितोऽनुरोधेन मार्गेणात्मवशं नयेत् ॥

[ भा० ११ स्क० । २० अ० । १८—१९ ]

इत्यादिभगवद्वचनात् । तस्मिंश्च सति

'अमानित्वमदम्भित्व' मित्याद्यारभ्य 'एतज्ज्ञानमिति प्रोक्त-' मित्यन्तेन ग्रन्थेन [ १३ अ० ७–११ ] भगवद्गीतोपनिषदुपदिष्टो ज्ञानयोगः प्रतिष्ठितो भवति देहेन्द्रियाद्यनासङ्गात्मकः ।

साङ्ख्येन सर्व्वभावानां प्रतिलोमानुलोमतः ।
भवाप्ययावनुध्यायेन्मनो यावत् प्रसीदति ॥
निर्व्विण्णस्य विरक्तस्य पुरुषस्योक्तवेदिनः ।
मनस्त्यजति दौरात्म्यं चिन्तितस्यानुचिन्तया ॥
यमादिभिर्योगपथैरान्वीक्षिक्या च विद्यया ।
ममार्च्चोपासनाभिर्व्वा (द्यैर्वा नान्यैर्योग्यं स्मरेन्मनः ॥

[ भा० ११ स्क० । २० अ० । २२—२४ ]

इत्यादिभगवद्वचनात् । अत्र 'मनो यावत् प्रसीदती'ति भक्तियोग एव ज्ञानावधित्वेनोक्तः, भक्तियोगं विना मनसः सम्यक् प्रसादाभावात् 'मनस्त्यजति दौरात्म्य'मित्यत्रापि स एव योगः । "ममार्च्चोपासनाद्यैर्वे"ति 'मयि चानन्ययोगेन भक्तिरव्यभिचारिणी'ति ज्ञानयोगान्तर्गतया साधनभक्त्येत्यर्थः । ततश्च

प्रोक्तेन भक्तियोगेन भजतो माऽसकृन्मुनेः ।
कामा हृदय्या नश्यन्ति सर्वे मयि हृदि स्थिते ॥

[ भा० ११ स्क० । २० अ० । २९ ]

इत्यादिभगवद्वचनानुसारिण्या साधनभक्तिनिष्ठया निखिलमपि प्रमाणं भगवत्येव प्रतिष्ठापयतः सकलविषयविमुखमनसो महाभागस्य कस्यचिद्भगवद्गुणगरिम-ग्रन्थनरूप-ग्रन्थ-श्रवणजनितद्रुतिरूपायां मनोवृत्तौ सर्वसाधनफलभूतायां गृहीतभगवदाकारायां विभावानुभाव-व्यभिचारि-संयोगेन रसरूपतया विभावानुभावव्यभिचारि-संयोगाद्रसनिष्पत्तिरिति ।

विभावो द्विविधः; आलम्बनविभाव उद्दीपनविभावश्च, तत्रालम्बनविभावो भगवान्, उद्दीपनविभावः तुलसी-चन्दनादिः । अनुभावो नेत्र-विक्रिया । व्यभिचारिणो भावा निर्वेदादयः । व्यक्तीभवद्भगवदाकारतारूप-रसाख्यः स्थायीभावः परमानन्दसाक्षात्कारात्मकः प्रादुर्भवति स एव भक्तियोग इति तं परमं निरतिशयं पुरुषार्थं वदन्ति रसज्ञाः;—

' तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः ।
न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिह ॥

यत्कर्म्मभिर्यत्तपसा ज्ञानवैराग्यतश्च यत् ।
योगेन दानधर्म्मेण श्रेयोभिरितरैरपि ॥
सर्वं मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसा ।
स्वर्गापवर्गं मद्धाम कथञ्चिद्यदि वाञ्छति ॥
न किञ्चित् साधवो धीरा भक्ता ह्येकान्तिनो मम ।
वाञ्छन्त्यपि मया दत्तं कैवल्यमपुनर्भवम् ॥
नैरपेक्ष्यं परं प्राहुर्निःश्रेयसमनल्पकम् ।
तस्मान्निराशिषो भक्तिर्निरपेक्षस्य मे भवेत् ॥
न मय्येकान्तभक्तानां गुण-दोषोद्भवा गुणाः ।
साधूनां समचित्तानां बुद्धेः परमुपेयुषाम् ॥

[ भा० ११ स्क० २० अ० ३२—३६ ]

इत्यादिवचनानि तदनुभवितारश्च 'दुःखासम्भिन्नसुखं हि परमपुरुषार्थ' इति सर्वतन्त्रसिद्धान्तः । धर्मार्थकाममोक्षाश्चत्वारः पुरुषार्था इति प्रसिद्धिस्तुलाङ्गलं जीवनमितिवत् साधने फलत्ववचनादौपचारकी, अतो न सुखमेव पुरुषार्थ इति पक्षहानिः । 'सुखं दुःखाभावश्च द्वौ पुरुषार्था' विति तार्किकाः, तन्न लाघवेन सुखमात्रस्यैव पुरुषार्थत्वकल्पनात् । इच्छाजनकत्वे हि ज्ञानस्य सुखविषयत्वमेवावच्छेदकं नतु सुखदुःखाभावान्यतरविषयत्वम् गौरवात्, दुःखाभावस्य तु सुखपरिचायकत्वेनोपयोगः ।

यत्तु न्यायनिवन्धनकारैः शङ्कितं दुःखाभावस्य सुखार्थत्वेनैवोपयोगेऽभिहिते सुखस्यापि दुःखाभावार्थिनोपयोगो वक्तुं शक्यते विनिगमनाविरहात् तस्मादुभयं पुरुषार्थ इति तदयुक्तम् व्याप्यव्यापकभावस्यैव विनिगमकत्वात्,यदा सुखं तदा दुःखाभाव इति हि

व्याप्तिः सर्वसम्मतानिरुपाधिसहचारदर्शनात्, अतो दुःखाभावस्य सुखकालेऽवश्यम्भावित्वात् सुखपरिचायकत्वमुपपद्यते तद्व्यापकत्वात्तस्य यदा दुःखाभवास्तदा सुखमिति तद्व्याप्तिः सुषुप्तिप्रलयादौ व्यभिचारात् अतो दुःखाभावस्य सुखाव्याप्यत्वान्न तत्परिचायकत्वम्, सुखस्य व्यापकत्वं हि व्याप्यस्थितिहेतुत्वेनान्यथासिद्धम् ।

सुखञ्च न दुःखाभावव्यापकमतस्तदेव स्वतन्त्रः पुरुषार्थः, दुःखाभावस्य सुखार्थत्वेनोपयोगे सर्वदुःखशून्यस्य दुःखाभावस्य मोक्षस्य पुरुषार्थत्वं न स्यादिति चेत् दीयतां जलाञ्जलिस्तस्मै, परमानन्दरूपत्वेन तु तस्य पुरुषार्थत्वं वेदान्तविदो वदन्ति; अतो भगवद्भक्तियोगस्यापि दुःखासम्भिन्नसुखत्वेनैव परमपुरुषार्थत्वमित्याह 'निरुपमसुखसम्भिद्रूपमस्पृष्टदुःख'मिति ।

एतेन भक्तिर्न पुरुषार्थो धर्म्मार्थ-काम-मोक्षेष्वनन्तर्भावादित्यादिकं सर्वमपास्तम् । धर्म्मार्थ-कामानां स्वतःपुरुषार्थत्वाभावात् तज्जन्यसुखस्यैव पुरुषार्थत्वे गौरवात् अननुगमाच्च धर्मजन्यत्वादिविशेषणं परित्यज्य सुखमात्रं पुरुषार्थ इति स्थिते समाधिसुखस्यैव भक्तिसुखस्यापि स्वतन्त्रपुरुषार्थत्वात्तस्य मोक्षसमीपवर्त्तितया मोक्षान्तर्भूतत्वे योगजधर्म्मजन्यतया धर्म्मान्तर्भूतत्वे वा भक्तिसुखस्यापि भागवतधर्म्मजन्यतया धर्म्मान्तर्भावस्य श्रद्धाजडान् प्रति वक्तुं शक्यत्वात् भक्तस्य संसार-मोक्षस्यावश्यकत्वात् मोक्षान्तर्गतो वा भक्तियोगः, तस्मात्पुरुषार्थचतुष्टयान्तर्गतत्वेन वा स्वातन्त्र्येण वाऽयं भक्तियोगः पुरुषार्थः परमानन्दरूपत्वादिति निर्व्विवादम् ।

तस्य परमानन्दरूपतामुपपादयन् अवान्तरविभागमाह-'नवरसमिलितं वा केवलं वे' ति स्पष्टमेतदुपरिष्टात् करिष्यते । 'मुकुन्द'इति भक्तियोगस्य विषयनिर्देशःसर्वान्तर्य्यामी सर्वेश्वर एव भक्तिरस।लम्वनविभाव इति वक्ष्यते, ग्रन्थादौ मङ्गलमाचरतां

सर्वदा सर्वकार्य्येषु नास्ति तेषाममङ्गलम् ।
येषां हृदि स्थितो साक्षान्मङ्गलायतनं हरिः ॥

इतिस्मृतेः, 'तमहं व्यनज्मी'ति अभिधेये सम्वन्धनिर्देशः शास्त्र-दृष्टचेत्यमूलत्वनिवारणम् 'अखिलतुष्ट्या'यिति प्रयोजननिर्देशः, साधूनां हि तुष्टिः स्वाभाविकी अन्येषामप्येतद्ग्रन्थोक्तयुक्तिभि-रसम्भावनाविपरीतभावनादिनिवृत्त्यान्तःकरणशुद्धेर्हेतोरित्यभि-प्रायः । के पुनर्भक्तियोगस्य पुमर्थवादाः शृणु तान् ;—

न ह्यतोऽन्यः शिवः पन्था विशतः संसृताविह ।
वासुदेवे भगवति भक्तियोगो यतो भवेत् ॥

[ भा० २ स्क० । २ अ० । ३३ ]

धर्म्मः स्वनुष्ठितः पुंसां बिश्वक्सेन-कथासु यः ।
नोत्पादयेद्यदि रतिं श्रम एव हि केवलम् ॥

[ भा० १ स्क० । २ अ० । ८ ]

दान-व्रत-तपो-होम—जप-स्वाध्याय-संयमैः ।
श्रेयोभिर्विविधैश्चान्यैः कृष्णे भक्तिर्हि साध्यते ॥

[ भा० । १० स्क० । ४७ अ० । २४ ]

भगवान् ब्रह्म कार्त्स्न्येन त्रिरन्वीक्ष्य मनीषया ।
तदध्यवस्यत् कूटस्थो रतिरात्मन् यतो भवेत् ॥

[ भा० २ स्क० । २ अ० । ३४ ]

एतावानेव लोकेऽस्मिन् पुंसां निःश्रेयसोदयः ।
तीव्रेण भक्तियोगेन मनो मय्यर्पितं स्थिरम् ॥

[ ३ स्क० । २५ अ० । ४४ ]

'या निर्वृतिस्तनुभृतां तव पादपद्म-
ध्यानाद्भवज्जनकथा-श्रवणेन वा स्यात् ।
सा ब्रह्मणि स्व-महिमन्यपि नाथ ! माभूत्
किन्त्वन्तकासि-लुलितात् पततां विमानात् ॥,

[ ४ स्क० । ९ अ० । १० ]

इत्यादयः अत्र हि सर्वसुकृतसाधनेन सर्ववेदतात्पर्य्यविषयत्वेन चार्थान्निःश्रेयसनिवृत्तिशब्दाभ्याञ्च साक्षादेव पुरुषार्थत्वं दर्शितम् ॥ गीतासु च—

योगिनामपि सर्वेषां मद्गतेनान्तरात्मना ।
श्रद्धावान् भजते यो मां स मे युक्ततमो मतः ॥

[ गीता ६ अ० । ४७ ]

इत्यादिना । ननु भक्तियोगस्य साधनत्वमपि बोधयन्त्यन्ये वादाः—

वासुदेवे भगवति भक्तियोगः प्रयोजितः ।
जनयत्याशु वैराग्यं ज्ञानं यत्तदहैतुकम् ॥

[ भा० । १ स्क० । २ अ० । ७ ]

अकामः सर्वकामो वा मोक्षकाम उदारधीः ।
तीव्रेण भक्तियोगेन यजेत पुरुषं परम् ॥

[ भा० । २ स्क० । ३ अ० । १० ]

केचित् केवलया भक्त्या वासुदेव-परायणाः ।
अघं धुन्वन्ति कार्त्स्न्येन नीहारमिव भास्करः ॥

[ भा० । ६ स्क० । १ अ० । १५ ]

गीतासु च;—

भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः ।
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ॥

[ १८ अ० । ५५ ]

इत्यादयः अत्रान्यसाधनत्वेन साक्षादपुरुषार्थत्वं स्पष्टमेवोक्तम् । अत्रोच्यते फलसाधनभेदेन भक्तिद्वैविध्योपपत्तेरदोषः तथाहि "भजनं अन्तःकरणस्य भगवताकारतारूपं भक्ति"रिति भावव्युत्पत्त्या भक्तिशब्देन फलमभिधीयते, तस्य च निरतिशयपुमर्थत्वात् पूर्व्वोक्तवादानां प्रामाण्यमव्याहतम्, तथा "भज्यते सेव्यते भगवदाकारमन्तःकरणं क्रियते अनये"ति करणव्युत्पत्त्या भक्तिशब्देन श्रवण-कीर्त्तनादि-साधनमाभिधीयते, तस्य च स्वयं पुरुषार्थत्वाभावात् साधनत्ववादानामपि प्रामाण्यमविरुद्धम्, यथा "विज्ञप्तिर्विज्ञान"मिति भावव्युत्पत्त्या 'विज्ञानमानन्दो ब्रह्म' [ ३ । ९ । २८ । वृ० । आ० । उ० ] इत्यत्र विज्ञानशब्दो ब्रह्मणि वर्त्तते, "विज्ञायतेऽनेने"ति करणव्युत्पत्त्या 'विज्ञानं यज्ञं तनुते' [ २ । ५ । १ । तैत्त० । उ० ] इत्यादावन्तःकरणे वर्त्तते तद्वत्, एतच्च स्पष्टीकृतं प्रबुद्धेन—

स्मरन्तः स्मारयन्तश्च मिथोऽघौघहरं हरिम् ।
भक्त्या सञ्जातया भक्त्या बिभ्रत्युत्पुलकां तनुम् ॥ इति

[ भा० । ११ स्क० । ३ अ० । ३१ ]

अत्र करणव्युत्पत्त्या प्रथमभक्तिशब्दो भागवतधर्म्मेषु प्रयुक्तः, द्वितीयस्तु भावव्युत्पत्त्या फले ।

इति भागवतान् धर्म्मान् शिक्षन् भक्त्या तदुत्थया ।
नारायणपरो मायामञ्जस्तरति दुस्तराम् ॥
[ भा० ११ स्क० । ३ अ० । ३३ ]

इत्युपसंहारे प्रथमभक्तिपदस्थाने भागवतधर्म्मशब्दप्रयोगात् न चाध्ययनस्याक्षरग्रहणात्मकस्यापि अक्षरग्रहणमेव फलं गुर्व्वधीनत्व-तदनधीनत्वाभ्यां विशेषात्, एवमत्रापि भागवतधर्म्मरूपा भक्तिरेव गुर्व्वधीनत्वेन साधनं तदनधीनत्वेन च निष्ठां प्राप्ता सती सैव फलमिति, न साधनफलभेदेन भक्तिद्वैविध्योपपत्तिरिति वाच्यम्,

क्वचिद्रुदन्त्यच्युतचिन्तया क्वचि-
द्धसन्ति नन्दन्ति ······ च निर्वृता इति *

मध्ये कृतकृत्यत्वपरामर्शात् यदा ह्यध्ययनफलस्याक्षरग्रहणस्यार्थज्ञानानुष्ठानादिवद्भागवतधर्म्मजनिताया भक्तेरपि फलान्तरसाधनत्वमभविष्यत् तदा परं पुरुषार्थं प्राप्य निर्वृतास्तूर्ष्णीं भवन्तीति कृतार्थता नावक्ष्यत्, अपितु तदन्तरमनुष्ठेयान्तरमपेक्षेत नच निर्दिशति तस्मात् साधनफलभेदेन भक्तिद्वैविध्योपपत्तेः साधनत्ववचनानां फलत्ववचनानाञ्च विषयविभागेन सर्व्वत्राविरोधः सिद्धः "अघं धुन्वन्ति कार्त्स्न्येन" इत्यादिफलसाधनयोः समानः फलरूपाया अपि भक्तेर्दृष्टादृष्टरूपताया वक्ष्यमाणत्वात्

---

* आदर्शपुस्तके पाठोऽयं किन्तु ११ स्क० । ३ अ० । ३२ सम्पूर्णश्लोको द्रष्टव्यः ।

एवं च;—

इदं हि पुंसस्तपसः श्रुतस्य वा
स्विष्टस्य सूक्तस्य च बुद्धदत्तयोः ।
अविच्युतोऽर्थः कविभिर्निरूपितो
यदुत्तमश्लोकगुणानुवर्णनम् ॥

[ भा० १ स्कं० । ५ अ० ।२२ ]

'निवृत्ततर्षैरुपगीयमानात्···पशुघ्नात्'[१०स्क०।१अ०।४] इत्यादौ साधनवचनं फलपरतया योजनीयम् 'गोभिः श्रीणीत-मत्सर' मितिवत् अत्र हि गोप्रभवैः क्षीरैर्मत्सरं सोमं मिश्रयेदित्यर्थः स्थितः पूर्व्वतन्त्रे च महतः परमव्यक्तमित्यत्राव्यक्तशब्दस्तत्प्रभव-शरीरमाचष्ट इति स्थितमानुमानिकाधिकरणे सूक्ष्मन्तु तदर्हत्वा-दित्यत्र एवमत्रापि गुणानुवर्णन गुणानुवादशब्दौ तज्जन्यप्रतीति-परतया योज्यौ अन्यथा परमपुरुषार्थत्वायोगात् । ननु तर्हि नामान्तरेण ब्रह्मविद्यैव भगवद्भक्तिरित्युक्तम्; तथाहि—

तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति ।
यज्ञेन दानेन तपसाऽनाशकेन

[ ४।४।२२ । बृ० । आ० । उ० ]

इत्यादिश्रुत्या सर्व्वसुकृतसाध्यत्वेन ब्रह्मविद्या प्रतिपादिता सर्वापेक्षाधिकरणे च तथैव निर्णीता इहापि पूर्वोदाहृतवचनैः सर्व्व-सुकृतसाध्यत्वेन लक्षणेन भगवद्भक्तेर्ब्रह्मविद्यारूपतायाः प्रतिपा-दनात्, तस्याश्च निरतिशयपुमर्थत्वस्य चतुर्लक्षणमीमांसयाऽप्रति-पत्ति-विप्रतिपत्तिनिवारणेन व्यवस्थापितत्वाद्व्यर्थोऽयं विचारा-रम्भ इति चेन्न स्वरूप-साधनफलाधिकारिवैलक्षण्याद्भक्ति-ब्रह्म-विद्ययोः द्रवीभावपूर्व्विका हि मनसो भगवदाकारता सविकल्पक-

वृत्तिरूपा भक्तिः, द्रवीभावानपेता द्वितीयात्ममात्रगोचरा निर्व्विकल्पकमनसो वृत्तिर्ब्रह्मविद्या, भगवद्गुणगरिमग्रन्थन-रूपग्रन्थ-श्रवणं भक्तिसाधनम् ।

'तत्त्वमस्या'दिवेदान्तमहावाक्यं ब्रह्मविद्यासाधनम्, भगवद्विषयकप्रेमप्रकर्षो भक्ति-फलम्, सर्व्वानर्थमूलाज्ञाननिवृत्ति-र्ब्रह्मविद्या-फलम्, प्राणिमात्रस्य भक्तावधिकारः, ब्रह्मविद्यायान्तु साधन-चतुष्टयसम्पन्नस्य परमहंस-परिव्राजकस्य अधिकारः, सर्व्वयज्ञदानादिसुकृतसाध्यत्वं समानं भक्ति-ब्रह्मविद्ययोः स्वर्ग-विविदिषयोरिव, यथा "स्वर्गकामो दर्श-पौर्णमासाभ्यां यजेते"ति स्थित एव स्वर्गसाधनत्वे सर्व्वकामेभ्यो 'दर्श-पौर्णमासा'विति वाक्येन फलान्तरसाधनत्वमपि वोध्यते, तथा 'तमेतं वेदानुवचनेन' इत्यादिना स्थित एव फलसाधनत्वे संयोगपृथक्त्वन्यायेन विविदिषा साधनत्वमपि वोध्यते ।

एवं भक्ति-ब्रह्मविद्योरपि स्वर्ग-ब्रह्म-विद्ययोरिव फलसाधनभावाभावश्च तुल्यसाधन-साध्यत्वञ्च भविष्यति, सामग्र्यैक्ये हि कार्य्यैक्यं नतु कारणमात्रैक्यैति प्रसङ्गात् ।

ननु ब्रह्मविद्यातिरिक्तत्वे भक्तेः स्वर्गादिवत् निरतिशयपुरुषार्थत्वेन स्यादिति चेन्न स्वर्गादिनियतदेश-काल-शरीरेन्द्रियादिभोग्यत्वेन सर्वत्रोपभोक्तुमशक्यत्वात् क्षयित्व-पारतन्त्र्यलक्षणदुःखद्वयानवि-द्धत्वेन निरतिशयत्वाभावेऽपि भक्तिसुखधारया सर्वदेश-काल-शरीरेन्द्रियादिसाधारण्येन ब्रह्मविद्याफलवदुपभोक्तुं शक्यत्वात् क्षयित्वपारतन्त्र्यलक्षणद्वयानुरोधाभावेन निरतिशयित्वोपपत्तेः

तदुक्तम्—

हित्वा स्वधर्म्मं चरणाम्बुजं हरे-
र्भजन्नपक्कोऽथ पतेत्ततो यदि ।
यत्र क्व वाऽभद्रमभूदमुष्य किं
को वार्थ आप्तो भजतां स्वधर्म्मतः ॥

[ भा० १ स्क० । ५ अ० । १७ ]

न वै जनो जातु कथञ्चनाव्रजे-
न्मुकुन्दसेव्यन्यवदङ्ग ! संसृतिम् ।
स्मरन्मुकुन्दाङ्घ्र्युपगूहनं पुन-
र्विहातुमिच्छेन्न रसग्रहो यतः ॥

[ १ स्क० । ५ अ० । १९ ]

सकृन्मनः कृष्ण-पदारविन्दयो-
र्निवेशितं तद्गुणरागि यैरिह ।
न ते यमं पाशभृतश्च तद्भटान्
स्वप्नेऽपि पश्यन्ति हि चीर्णनिष्कृताः ॥

[ भा० । ६ स्क० । १ अ० । १९ ]

इत्यादि अतएवापत्तावपि दुःखासंस्पर्शित्वप्रतिपादनाया-स्पृष्टदुःखमिति विशेषणमुपात्तम्, अतएव च न परिणतिविरसेन स्वर्गादिना साम्यम्, एतेन लौकिकरसवैलक्षण्यमपि व्याख्यातम्।

तस्यापि शास्त्राविहितत्वेन पापक्षयाहेतुत्वेनापत्तौ दुःख-संस्पर्शित्वात् भक्तेस्तु दृष्टादृष्टफलतया महान् विशेषो वक्ष्यते । नन्वेवं सति भक्तिसुखाद्वैराग्यासम्भवेन मुमुक्षुत्वासम्भवात्तदधि-कारिकचतुर्लक्षणमीमांसारम्भो न स्यादिति चेत् सत्यम्; भक्ति-

सुखासक्तान् प्रति तस्या अनारम्भात् भजनीयस्वरूपनिर्णयार्थं भक्तानामपि तद्विचारस्यावश्यकत्वाच्च भक्तिसुखद्वैराग्यं न स्यादिति त्विष्टमेव नापादितम् ।

आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे ।
कुर्व्वन्त्यहैतुकीं भक्तिमित्थम्भूतगुणो हरिः ॥
[ भा० । १ स्क० । ७ अ० । १० ]

इत्यादिना जीवन्मुक्तानामपि भगवद्भक्तिप्रतिपादनात्, तस्मादस्य ग्रन्थस्य नामकथनद्वारा प्रयोजनमुद्दिशति—

संसाररागेण बलीयसा चिरं
निपीडितैस्तत्प्रशमेति शिक्षितम् ।
इदं भवद्भिर्बहुधा व्ययातिगं
निपीयतां भक्तिरसायनं बुधाः ॥२॥ स्पष्टम् ॥

भगवद्भक्तेरसरूपतया पुमर्थतां वक्तुं प्रथमं सामान्यलक्षणमाचष्टे—

द्रुतस्य भगवद्धर्म्माद्धारावाहिकतां गता ।
सर्वेशे मनसो वृत्तिर्भक्तिरित्यभिधीयते ॥ ३ ॥

भगवद्धर्म्मश्च भगवद्गुणश्रवणं नतु धर्म्मबुद्ध्या तदनुष्ठानपर्य्यन्तं विवक्षितम्

"तस्मात् केनाप्युपायेन मनः कृष्णे निवेशयेत्"
[ भा० ७ स्क० । १ अ० । ३१ ]

इत्यत्रापि केनाप्युपायेनेति धर्म्मबुद्ध्यानुष्ठितेनायत्नसिद्धेन वा भगवद्गुणश्रवणेनेत्यर्थः तेन शिशुपालादौ नाव्याप्तिः, भगवद्गुणश्रवणेन वक्ष्यमाणकामक्रोधाद्युद्दीपनद्वारा द्रवावस्थां प्राप्तस्य चित्तस्य धारावाहिका या सर्वेशविषया वृत्तिर्भगवदाकारतेत्यर्थः

तदाकारतैव हि सर्वत्र वृत्तिशब्दार्थोऽस्माकं दर्शनेऽतः सा भक्तिरित्यभिधीयते शास्त्रविद्भिः, तथा च शास्त्रम्—

मद्गुणश्रुतिमात्रेण मयि सर्व्वगुहाशये ।
मनोगतिरविच्छिन्ना यथा गङ्गाम्भसोऽम्बुधौ ॥
लक्षणं भक्तियुक्तस्य( योगस्य ) निर्गुणस्य ह्युदाहृतम् ।

[ भा० । ३ स्क० । २९ । ११ । १२ ]

अत्राविच्छिन्नेति धारावाहिकता दर्शिता, यथा गङ्गाम्भस इति दृष्टान्तेन दार्ष्टान्तिकेऽपि मनसि द्रवावस्था मयि सर्व्वगुहाशये मनोवृत्तिरिति सर्वेषाकारता तेनाद्रवावस्थायां धारावाहिक्यपि वृत्तिर्द्रवावस्थाया मध्यस्तु विनाशिनी सा द्रव्यत्व-धारावाहिकत्व-प्रयुक्तापि सर्वेशविषया न भक्तिरित्युक्तम्, तदेव स्पष्टयितुं चित्त-चेष्टितमाचष्टे—

चित्तद्रव्यं हि जतुवत् स्वभावात् काठिनात्मकम् ।
तापकैर्विषयैर्योगे द्रवत्वं प्रतिपद्यते ॥ ४ ॥

जतुनो हि दहनात्मकतापकयोगमन्तरेण काठिन्यशान्तिर्न भवति सौरालोकादियोगे तु शिथिलीभावमात्रं न द्रुतिरिति सर्व्वसिद्धम्, एवं चित्तस्यापि वक्ष्यमाणकामादिविषयात्मकतापक-संयोगं विना न द्रवीभावो विषयमात्रसंयोगपाटवे तु शिथिली-भावमात्रमिति तापकपदोपादानेन सूचितम्, तानेव तापकाना-

काम-क्रोध-भय-स्नेह-हर्ष-शोक-दयादयः ।
तापकाश्चित्तजतुनस्तच्छान्तौ कठिनन्तु तत् ॥ ५ ॥

एषां प्रत्येकं लक्षणं भेदांश्च वक्ष्यति, यद्विषये कामादीना-मुद्रेकस्ताद्विषये चित्तस्य द्रवीभावः पुनर्विषयान्तरसञ्चारादिना

कामादि-तिरोभावे काठिन्यमेवेत्यर्थः । द्रवीभावप्रयोजनमाह—

द्रुते चित्ते विनिक्षिप्तः स्वाकारो यस्तु वस्तुना ।
संस्कारवासनाभाव-नाशनाशब्दभागसौ ॥ ६ ॥

न तु विनश्यताज्ञानेन जनितस्तार्किकादिपरिकल्पित आत्मगुण इत्यर्थः ।

शिथिलीभावभावन्तु मनो गच्छत्यतापकैः ।
न तत्र वस्तु विशति वासनात्वेन किञ्चन ॥ ७ ॥

तु ईषदर्थे अतापकैरीषत्तापकैः सौरालोकादिस्थानीयैर्विषयैर्योगे सति मनः किञ्चिदवयवविशरणमात्रं प्राप्नोति, अतः शिथिलीभूते जतुनीव तादृशे मनसि न किञ्चिद्वस्तु वासनात्वेन विशति, किन्तु वासनावैलक्ष्यण्येन तदाभासत्वेनैव विशतीत्यर्थः। चित्तद्रुतौ भवति वासनाशिथिलीभावे तु वासनाभास इत्यत्र विनिगमकमाह—

द्रवतायां प्रविष्टं सद्यत् काठिन्यदशां गतम् ।
चेतः पुनर्द्रुतौ सत्यांमपि तन्नैव मुञ्चति ॥ ८ ॥

द्रवावस्थाप्रविष्टं हिङ्गुलादिरङ्गस्य जतुनः पुनः काठिन्यापनयनेन काष्ठादिसंयोगे जायमाने यथा स एव रङ्गः प्रतिभासते शैथिल्यावस्थाप्रविष्टस्तु रङ्गो न तथा एवं द्रवावस्थे चेतसि यद्वस्तुस्वरूपं प्रविष्टं सत्काठिन्यदशापर्य्यन्तं स्थितं तत् पुनर्द्रवीभावान्तरेण विषयान्तरे गृह्यमाणेऽपि प्रकाशमानत्वाचेतसा न त्यज्यतेऽतः सा वासनेत्युच्यते,शैथिल्यावस्थाप्रविष्टन्तु काठिन्यावस्थापर्य्यन्तं तिष्ठति तिष्ठद्वा विषयान्तरग्रहणसमये चित्ते न त्यज्यते इति सवासनाभास इत्यर्थः । अतएव यस्यैकद्रुते चित्ते

भगवदाकारता प्रविष्टा सर्व्वदा तज्ज्ञानात् कृतकृत्यो भवतीत्युक्तम्।

सर्व्वभूतेषु यः पश्येद्भगवद्भावमात्मनः ।
भूतानि भगवत्यात्मन्येष भागवतोत्तमः ॥

[ भा० । ११ स्क० । २ अ० । ४५ ]

इति सर्व्वभूताग्रहणसमयेऽपि द्रवावस्थाप्रविष्टभगवदाकारता-प्रतिष्ठाया एव प्रकाशनाज्जतुरङ्गवत् सर्व्वभूते भगवद्भानोपपत्तिः स च भागवतोत्तमः एतादृशसंस्कारस्यापि नाशित्वादिति भावः, अतएव ब्रह्मविदेवैतादृश इत्यपास्तम्, तस्य ब्रह्मविदः द्रवा-वस्थाया अनपेक्षितत्वेनोत्तम-मध्यम-प्राकृतभक्तेष्वगणनीयत्वात् अत्र तु द्रवावस्थापरिपुष्टौ "सर्व्वभूतेषु यः पश्ये" दित्यवस्थायां भागवतोत्तमः उक्तः ईषदद्रवावस्थायान्तु वासनाभासेन—

ईश्वरे तदधीनेषु (च) वालिशेषु द्विषत्सु च ।
प्रेममैत्री कृपोपेक्षा यः करोति स मध्यमः ॥

[ भा० ११ स्क० । २ अ० । ४६ ]

इत्युक्तं, एतादृगवस्था यतोऽग्रे द्रवावस्थाया उत्पत्स्यमान-त्वादित्यर्थः । यस्य तु चित्ते न द्रवावस्थापुष्टानामीषदुत्पन्ना किन्तु स्वयं तदर्थं भागवतधर्म्मान् श्रद्धयानुतिष्ठति सं काठिन्यावस्था विनाशसामग्र्यूविशिष्टः ।

अर्च्चायामेव हरये पूजां यः श्रद्धयेहते ।
न तद्भक्तेषु चान्येषु स भक्तः प्राकृतः स्मृतः ॥

[ भा० । ११ स्क० । २ अ० । ४७ ]

इत्युक्तम्, प्रकृतिरारम्भस्तस्यां वर्त्तमानः प्राकृतः, साम्प्रतं प्रारब्धभक्तिसाधनानुष्ठान इत्यर्थः । इयमेव द्रवावस्थाप्रणयानु-

रागस्नेहादिशब्दैरपि सङ्कीर्त्यते यथा—

विसृजति हृदयं न यस्य साक्षा-
द्धरिरवशाभिहितोऽप्यघौघनाशः ।
प्रणयरशनया धृताङ्घ्रिपद्मः
स भवति भागवतप्रधान उक्तः ॥

[ भा० । ११ स्क० । २ अ० । ५५ ]

प्रणयो द्रवावस्था स एव रसना रज्जुवद्बन्धनसाधनं, तस्यां द्रवावस्थायां प्रविष्टस्य पुनर्निर्गमनाभावादित्यर्थः, द्रवावस्था-प्रविष्टभगवतसरूपभानस्य त्रिविधत्वादुत्तमभागवतोऽपि त्रिविधः, तत्राद्यं प्रपञ्चसत्यत्वभानसहितं यथा—

खं वायुमग्निं सलिलं महीञ्च
ज्योतींषि सत्त्वानि दिशो द्रुमादीन् ।
सरित्समुद्रांश्च हरेः शरीरं
यत् किञ्च भूतं प्रणमेदनन्यः ॥

[ भा० । ११ स्क० । २ अ० । ४१ ]

इत्यादि, अनेन प्राकृतो भागवतोत्तमः । द्वितीयं प्रपञ्च-मिथ्यात्वभानसहितं यथा—

तस्मादिदं जगदशेषमसत्स्वरूपम्
स्वप्नाभमस्तधिषणं पुरुदुःखदुःखम् ।
त्वय्येव नित्यसुखबोधतनावनन्ते
मायात उद्यदपि यत् सदिवावभाति ॥

[ भा० । १० स्क० । १४ अ० । २२ ]

अनेन मध्यमो भागमतोत्तमः । तृतीयं प्रकारद्वयेनापि प्रपञ्च-भानरहितं यथा—

ध्यायतश्चरणाम्भोजं भावनिर्वृत (र्जित) चेतसा ।
औत्कण्ठ्याश्रुकलाक्षस्य हृद्यासीन्मे शनैर्हरिः ॥
प्रेमातिभरनिर्भिन्न-पुलकाङ्गोऽतिनिर्वृतः ।
आनन्दसम्प्लवे लीनो नापश्यमुभयं मुने ! ॥

[ भा० । १ स्क० । ६ अ० । १७—१८ ]

अनेनोत्तमो भागवतोत्तमः साधनाभ्यास-परिपाकेणोत्तम भूमिलाभः, द्रवावस्थाप्रविष्टविषयाकारस्यानपायित्वे स्थायि-शब्दोऽपि तत्र मुख्य एव न पारिभाषिक इत्याह—

स्थायिभावगिरातोऽसौ वस्त्वाकारोऽभिधीयते ।
व्यक्तश्च रसतामेति परानन्दतया पुनः ॥ ९ ॥

विभावानुभाव-व्यभिचारिसंयोगेनाभिव्यक्तः स्थायीभाव एव सभ्याभिनेययोर्भेदतिरोधानेन सभ्यगत एव सन् परमानन्द-साक्षात्काररूपेण रसतामाप्नोतीति रसविदां मर्य्यादा ।

तदुक्तमाचार्य्यभरतेन—

'विभावानुभाव-व्यभिचारिसंयोगाद्रसनिष्पत्ति' रिति, अतो भक्तेरपि रसतां वक्तुं स्थायीभावो निरूप्यत इति भावः ।

स्थायिभावरसत्वोपपत्तये परमानन्दरूपतामुपपादयति—

भगवान् परमानन्दस्वरूपः स्वयमेव हि ।
मनो गतस्तदाकार-रसतामेति पुष्कलम् ॥ १० ॥

बिम्बमेव ह्युपाधिनिष्ठत्वेन प्रतीयमानं प्रतिबिम्बमित्युच्यते परमानन्दश्च भगवान् मनसि प्रतिबिम्बितः स्थायिभावतामासाद्य रसतामापादयतीति भक्तिरसस्य परमानन्दरूपत्वं निर्व्विवादम्, नाप्यालम्बनविभाव-स्थायिभावयोरैक्यं बिम्ब-प्रतिबिम्बभावत्वेन

भेदस्य व्यवहारसिद्धत्वात् ईश-जीवयोरिव ।

नन्वेवं भगवदाकारस्य परमानन्दरूपस्य स्थायिभावत्वेन भक्तिरसस्य परमानन्दरूपत्वमस्तु कान्तादिविषयाणां शृङ्गारादिरसानामतथात्वात् कथं परमानन्दरूपता ? इत्यत आह—

कान्तादिविषयेऽप्यस्ति कारणं सुखचिद्घनम् ।
कार्य्याकारतया भेदेऽप्यावृतं मायया स्वतः ११ ॥

"आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते" "आनन्देन जातानि जीवन्ति" 'आनन्दं प्रयन्त्यभिसंविशन्ति' ( तै० । उ० । भृ० । व० । ३ । ६ अनु० । २ । ३ । ४ ) इत्यादिश्रुत्या हि परमानन्दरूपं ब्रह्म जगदुपादानमिति प्रतिपादितम् । "जन्माद्यस्य यतः" ( ब्रह्मसू० । १ अ० । १ पा० । २ सू० ) इति न्यायेन तथैव निर्णीताम् उपादानाभिन्नञ्च सर्व्वं कार्य्यं मृदभिन्नघटवत् सर्वत्र दृष्टम् "सर्व्वं खल्विदं ब्रह्म" ( छा० । ३ अ० । १४ ख० । १ ) "इदं सर्व्वं यदयमात्मा" ( बृ० । अ० । ४ । ५ । ७ ) 'सदेव सौम्येदमग्र आसीत्' ( छान्द० । ६ अ० । २ ख० । १ ) इत्यादि श्रुतिश्च तथैव प्रतिपादितम् "तदनन्यत्वमारम्भणशब्दादिभ्य" ( २ अ० । १ पा० । १४ सू० ) इति न्यायेन च निर्णीतम् । एवं सत्यप्यखण्डानन्दाद्व्याकारेण तदभाने हेतू मायानिमित्तौ वावरणविक्षेपावित्याह—कार्य्येति अकार्य्यस्यापि कार्य्याकारेण भानं विक्षेपः अखण्डानन्दकारेण स्वतोऽभानमावरणम्, तदुक्तम्—

ऋतेऽर्थं यत् प्रतीयेत न प्रतीयेत चात्मनि ।
तद्विद्यादात्मनो मायां यथाभासो यथा तमः ॥ इति
[ भा० २ स्क० । ९ अ० । ३३ ]

कथं तर्हि तस्य भानमित्यत आह--

सदज्ञानञ्च तद्ब्रह्म मेयं कान्तादिमानतः ।
मायावृत्ति-तिरोधाने वृत्त्या सत्त्वस्थया क्षणम् ॥१२॥

अज्ञानज्ञापकत्वेनैव हि सर्व्वेषां मानानां मानता अन्यथा स्मृतेरपि मानतापत्तेः, अज्ञातञ्च स्वप्रकाशतया भासमानचैतन्यमेव न जडं तस्य मानामसत्त्या तत्रावरणकृत्याभावात् अतः कान्तादिगोचर-मानानामज्ञान-ज्ञापकत्वेन प्रामाण्याय तत्तदवच्छिन्नचैतन्यमेव विषयः वाच्यः अन्यथा तदयोगात्, तथाच सात्त्विक्या प्रमाणजनिताऽपरोक्षे वृत्त्यावरणतिरोभावे सति तत्तद्विषया-वच्छिन्नत्वेन भासते वस्तुतः परमानन्दरूपविषयोपादानचैतन्या-वच्छिन्न-चैतन्यास्वरूपाभानाच्च न सद्यो मुक्तिः स्वप्रकाशभङ्गो वा, ततः किमत आह--

अतस्तदेव भावत्वं मनसि प्रतिपद्यते ।
किञ्चिन्न्यूनाञ्च रसतां याति जाड्यविमिश्रणात् ॥१३॥

विषयावच्छिन्नचैतन्यमेव द्रवावस्थामनोवृत्त्या रूढतया आविर्भावित्वं प्राप्य रसतां प्राप्नोतीति न लौकिकरसस्यापि परमानन्दरूपतानुपपत्तिः, अतएवानवच्छिन्नचिदानन्दघनस्य भगवतः स्फुरणाद्भक्तिरसेऽत्यन्ताधिक्यमानन्दस्य लौकिकसेतु-विषयावच्छिन्नस्यैव चिदानन्दांशस्य स्फुरणात् तत्रानन्दस्य न्यूनतैव तस्माद्भक्तिरस एव लौकिकरसानुपेक्षं सेव्य इत्यर्थः ॥

इति वेदान्त-सिद्धान्तस्थापिना रसतोदिता ।
साङ्ख्यसिद्धान्तमाश्रित्याप्यधुना प्रतिपद्यते ॥ १४ ॥

स्थायिनो रसतेत्यनुषङ्गः, एतावदेव व्युत्पादयितुं साङ्ख्य-सिद्धान्तम् व्युत्पादयति—

तमोरजःसत्त्वगुणा मोह-दुःख-सुखात्मकाः ।
तन्मयी प्रकृतिर्हेतुः सर्व्वं कार्य्यञ्च तन्मयम् ॥ १५॥

तथाहि साङ्ख्या एवमाचक्षते—सर्व्वे भावाः सुख-दुःख-मोहात्मकैकसामान्यप्रकृतिकाः सुखदुःखमोहात्मकत्वेन प्रतीयमानत्वात् ये यदात्मकत्वेन प्रतीयन्ते ते तदात्मकसामान्यप्रकृतिकाः यथा मृदात्मकतया प्रतीयमाना मृत्सामान्यप्रकृतिका घट-शरावादयः अनुगतकारणातिरिक्तसामान्यानभ्युपगमात् न घटत्वादिना व्यभिचारः सुख-दुःख-मोहात्मकत्वेन चैते प्रतीयन्ते तस्मात्तत्-सामान्यप्रकृतिका इत्यनुमानेन सुख-दुःख-मोहात्मकप्रकृतिसिद्धिः, तत्र यत् सुखं तत् सत्त्वं, यद्दुःखं तद्रजः, यो मोहो विषादः स तम इति तस्मात्त्रिगुणात्मकापि सिद्धिः ।

न च परमाणुभिर्ब्रह्मणा चार्थान्तरता परमाणुवादे कार्य्य-कारणयोर्भेदाभ्युपगमेन तेषामतीन्द्रियत्वेन च तदात्मकतया कस्यापि कार्य्यस्य प्रतीयमानत्वाभावात् परमाणुषु प्रमाणाभावाच्च सर्गाद्यकालीनकार्य्योपादानानुमानस्य लाघव-तर्कसहकारेणैकोपादानविषयत्वात् क्षित्यादिकर्त्रनुमानस्यैककर्त्तृ-विषयत्ववत् कार्य्य-कारणयोरभेदाभ्युपगमेऽपि न जगतो ब्रह्मात्मना प्रतीयमानत्वं सम्भवति ।

ब्रह्मणः सार्व्वलौकिकमानागोचरत्वाभ्युपगमात् सद्रूपेण ब्रह्मापि सर्व्वप्रमाण-गोचरः, तथाच तदात्मना कार्य्यस्य प्रतीयमानत्वमस्त्येवेति चेत् किमनेनाकाण्डताण्डवेन ब्रह्मणो निःसामान्यविशेषत्वेन नानारूपासम्भव इति साङ्ख्यसङ्ख्यावतामभिमानः ।

ननु भवतामसिद्धो हेतुः सुख-दुःख-मोहानामान्तराणां वाह्यघटादितादात्म्यासम्भवात् सम्भवम्वा सर्व्वं वस्तु सर्व्वं प्रमातारं प्रति त्र्याकारतया प्रथेत ? इत्यत आह—

त्रिगुणात्मकमेकैकं वस्तु त्र्याकारमीक्षते ।
निजमानस-सङ्कल्पभेदेन पुरुषैस्त्रिभिः ॥ १६ ॥

न तावदान्तर-वाह्ययोस्तादात्म्यसम्भवः वाह्यानामेव मनः-प्रतिविम्बितत्वेनान्तरत्वात्, नापि सर्व्वान् प्रति तुल्यभानप्रसङ्गः तत्तद्वासनारूपसहकारिभेदात्; एतदेवोदाहरति—

कामिन्याः सुखता भर्त्रा सपत्न्या दुःखरूपता ।
तदलाभात्तथान्येन मोहत्वमनुभूयते ॥ १७ ॥

भर्त्तारं प्रति हि कामिन्याः सत्वांश एवोद्रिच्यते सपत्नीं प्रति तु रजोंऽश एव तां कामयमानमन्यञ्च तामविन्दन्तं तमोंऽश एव अतः क्रमेण तेषु सुख-दुःख-विषादाः प्रादुर्भवन्त्यतो व्यवस्थोपपत्तिः वासनाभेदेनैकस्मिन्नपि भानभेदो भट्टाचार्य्यैरप्युक्तः "परिव्राट्कामुकशुनामेकस्यां प्रमदातनौ कुणपः कामिनीभक्ष्य-" मिति तिस्रो विकल्पना इति फलितमाह—

एवं सति सुखाकारः प्रविष्टो मानसे यदा ।
तदा स्थायिभावत्वं प्रतिपद्य रसो भवेत् ॥१८॥

क्रोधादिभावस्यापि रजस्तमोऽमिश्रितत्वोद्रेक-निवन्धनचित्त-द्रुतिफलितत्वात् सुखमयत्वमित्यभिप्रायः द्रवीभावस्य सत्व-धर्म्मत्वात्तं विना च स्थायिभावासम्भवात् सत्त्वगुणस्य च सुख-रूपत्वात् सर्व्वेषां भावानां सुखमयत्वेऽपि रजस्तमोंऽशमिश्रणा-

तारतम्यमवगन्तव्यम्, अतो न सर्व्वेषु रसेषु तुल्यसुखानुभवः उपरिष्टाच्च स्पष्टीकरिष्यते ।

अत्राहुस्तार्किकाः नित्यं निरवयवमणुपरिमाणं मनस्तस्य कथं सावयवदृष्टान्तेन द्रवीभावद्वारा विषयाकारपरिणामो वक्तुं शक्यते; न हि निरवयवस्य ह्रासवृद्धी सम्भवतः तस्मादुक्त-स्थायिभाव-निरूपणमसङ्गतमिति तत्राह—

परमाण्वेकरूपन्तु चित्तं न विषयाकृति ।
इत्यादिमतमन्येषामप्रामाण्यादुपेक्षितम् ॥ १९ ॥

आदिशब्दाद्विभुः मन इति, प्राभाकराणां समनन्तरप्रत्यय एवोत्तरज्ञानकारणतया मन इति सौगतानाञ्च मतं सङ्गृहीतम्; अयम् भावः करणत्वात् परमाण्वादिवत्, इन्द्रियत्वाच्चक्षुरादिवत् मनसो मध्यमपरिमाणत्वमनुमीयते, न चाणुत्वानुमाने किञ्चि-ल्लिङ्गमस्ति ।

नापि नित्येन्द्रियत्वाच्छ्रोत्रवत् बुद्धित्वानुमानात् नित्य-त्वस्यासिद्धत्वात् आकाशस्यापि नित्यत्वाभावेन तत्कार्य्य-श्रोत्रस्य सुतरां नित्यत्वाभावात्, अतएव जन्यस्य विभुत्वाभा-वान्मध्यमपरिमाणत्वानुमानस्य श्रोत्रेन व्यभिचारः यदिन्द्रियं यद्गुणग्राहकं तदिन्द्रियं तद्गुणवदिति व्याप्तेः, यथा चक्षुरादेः स्वग्राह्यगुणवद्भूतारभ्यत्वं साध्यते तथा मनसोऽपि पञ्चमहा-भूतग्राहकत्वेन तद्वत्त्वनिश्चयात् स्वग्राह्यगुणवत्त्वेन भूतारभ्यत्वं साध्यतां विशेषाभावात् ।

न च विजातीयानामनारम्भकत्वं विशेषः सुवर्णसूत्रैः पट्ट-सूत्रैः कार्पास-सूत्रैश्च विजातीयैरेकपटारम्भदर्शनात् ।

तत्रावयव्यनङ्गीकारेऽन्यत्रापि तथानङ्गीकार-सम्भवादवयविनो दत्तजलाञ्जलिताप्रसङ्गात्, तस्मादपञ्चीकृत-पञ्चमहाभूतारम्भं सत्त्वं प्रधानं सङ्कोच-विकाश-शीलं स्वच्छद्रव्यचक्षुर्वन्मूर्त्त-द्रव्याभिघातयोग्यञ्च देहपरिमाणं मनोऽभ्युपगन्तव्यम् सिद्धान्ते सुख-दुःखेच्छा-ज्ञानादीनां तदाश्रयत्वाभ्युपगमात्, तेषाञ्च सर्व्वशरीरव्यापित्वेनोपलम्भात् ।

तदाश्रयस्य मनसोऽपि सर्व्वशरीरव्यापित्वात् अणुत्वाभावे युगपत्सर्व्वेन्द्रिय-सम्बन्ध-सम्भवाद्युगपन्नानाज्ञानोत्पत्तिप्रसङ्ग इति चेन्न एकेनेन्द्रियेणैकदा एकमेव जन्यते इति नियम-स्तावदावयोः समः, अन्यथा युगपच्चाक्षुषज्ञानद्वयोत्पत्तिः किं न स्यात्? नाना इन्द्रियजन्यज्ञानानान्तु युगपदुत्पत्तिरिष्यत एव दीर्घां शष्कुलीं भक्षयतः शब्द-स्पर्श-रूप-रस-गन्धानां युगपदनु-भवात्, सुषुप्त्यन्यथानुपपत्त्या त्वङ्मनःसंयोगजं ज्ञानमत्र कारण-त्वेन त्वयाभ्युपगमाद्रसनावच्छिन्नत्वङ्मनःसंयुक्तस्य गुडस्य युगपद्रसस्पर्शोपलम्भस्तवापि दुर्निवारः, तस्मान्नास्मदभ्युपगते मनसि श्रुति-स्मृति-न्याय-सिद्धे विमतिः सम्भवति समनन्तर-प्रत्ययस्त्वतिनिर्युक्तिकत्वादुपेक्षितः, विस्तरस्त्वस्मदीय-वेदान्त-कल्पलतायामनुसन्धेयः ।

अतः स्वच्छस्वभावस्य सावयवस्य मनसो-दर्पणादिवद्-विषयाकारग्राहकत्वं वेदान्तशास्त्रे साङ्ख्यशास्त्रे च यन्निरूपितं तत् प्रामाणिकत्वाद्वेदान्ते समीचीनमेवेत्याह—

गृह्णाति विषयाकारं मनोविषययोगतः ।
इति वेदान्तिभिः साङ्ख्यैरपि सम्यङ्निरूपितम् ॥२०॥

यद्यपि साङ्ख्यानामाहङ्कारिकं मनः ब्रह्मवादिनान्तु मते भौतिकमिति महान् विशेषस्तथापि विषयाकारग्राहकत्वं समानमिति तुल्यवदुभयोरुपन्यासः द्रवीभावपूर्व्वकं चित्तस्य विषयाकारभजनमित्यत्र भाष्यकारवचनमुदाहरति—

मुषासिक्तं यथा ताम्रं तन्निभं जायते तथा ।
घटादिव्याप्नुवच्चित्तं तन्निभं जायते ध्रुवम् ॥२१॥

मूषायां पुटकपाकयन्त्रे तद्द्वाराद्द्रवीभूतं ताम्रं यन्त्रप्रतिमाद्याकारघटिते मृदादिसंस्थानविशेषे सिक्तं भवति तत्तदुदरस्थसंस्थानाकारं भवति द्रुतत्वात् । एवं रागद्वेषादिना द्रवीभूतं चित्तं चक्षुरादिद्वारा यत्र सिक्तं भवति स्वयमपि तद्विषयाकारं भवतीति कारिकार्थः ।

यद्यप्यस्मिन् वाक्ये सामान्यत एवं द्रवीभाव उक्तस्तथाप्यनुभवबलाद्रागद्वेषादिविषये व्यवस्थाप्यते तदभावे तु शिथिलीभावमात्रमित्युक्तमधस्तात् मनोविषयाकारविषयगतावरणनिवर्त्तकत्वादालोकवदित्यनुमानमस्मिन्नर्थे प्रमाणमाह—

व्यञ्जको वा यथा लोको व्यङ्ग्यस्याकारतामियात् ।
सर्व्वार्थव्यञ्जकात्वाद्धीरर्थाकारा प्रदृश्यते ॥२२॥

व्यञ्जकस्य तदाकारत्वाभावे तद्गतवरणनिवृत्तेरदर्शनादित्यर्थः ।

भगवत्पूज्यपादानामियमुक्तिः सयुक्तिका ।
तथा वार्त्तिककारैरप्ययमर्थो निरूपितः ॥ २३ ॥

व्यञ्जको वेत्याद्युक्तिर्वार्त्तिककाराणामपि युक्तिरनुमानरूपा दर्शिता । वार्त्तिककाराणां वाक्यान्तरमुदाहरति—

मातुर्मानाभिनिष्पत्तिर्निष्पन्नं मेयमेति चेत्।
मेयाभिसङ्गतं तच्च मेयाभत्वं प्रपद्यते ॥

मातुश्चिदचिद्ग्रन्थिरूपात्सचित्कादन्तःकरणाद्वृत्तिज्ञानाख्यस्य द्रवीभावपूर्वकस्य मातुः शब्दवाच्यस्य परिमाणविशेषस्याभिनिष्पत्तिर्भवति तच्च परिणामविशेषात्मकं मानं निष्पन्नं सच्चक्षुरादिद्वाराघटादिविषयपर्यन्तंगच्छति, शरीरावच्छिन्नमन्तःकरणमत्यजदेव कुल्याजलवत्, ततश्च घटादिसम्बद्धं सद्द्वयकारतां प्राप्नोति, ततश्च तत्र चैतन्याभिव्यक्त्या घटाद्युपलम्भ इति कारिकार्थः सर्वा चेयं प्रक्रियास्माभिर्विस्तरेण सिद्धान्तविन्दौ प्रतिपादिता, ग्रन्थगौरवभिया नोदाह्रियते ।

पञ्चदश्यां विद्यारण्यैरप्ययमर्थो दर्शितः, तमुपसंहारव्याजेनाह—

अतो मांसमयी योषित् काचिदन्या मनोमयी ।
मांसमय्या अभेदेऽपि भिद्यतेऽत्र मनोमयी ॥ २४ ॥

मनोमयाकारभेदं विनैकस्मिन् भौतिके पिण्डे भेदप्रत्यया-योगात् । भेदप्रतीतिमेव सर्वसिद्धामुदाहरति—

भार्या स्नुषा ननान्दा च याता मातेत्यनेकधा ।
जामाता श्वशुरः पुत्रः पितेत्यादि पुमानपि ॥२५॥

भिद्यत इत्यनुषङ्गः, एकानेकत्ववैधर्म्यमुक्त्वा विनाशित्वाविनाशित्व-वैधर्म्यान्तरमाह—

वाह्यपिण्डस्य नाशेऽपि तिष्ठत्येव मनोमयः ।
अतः स्थायीति विद्वद्भिरयमेव निरूपितः ॥ २६ ॥

अपिशब्दाद्वाह्यस्य देशकालादिना व्यवधानेऽपि मनोमयोऽव्यवहित एवेत्यर्थः ।

एवं स्वभावतो भावस्वरूपमुपवर्णितम् ।
विशेषेण तु सर्व्वेषां लक्षणं वक्ष्यते पृथक् ॥ २७ ॥

मनोमयो विषयाकार एवाविनाशित्वात् स्थायीति कथितम्, तस्य तु रतिहासादिरूपेण भेदस्तल्लक्षणञ्च वक्ष्यतेऽन्तरोल्लासे इत्यर्थः। यस्माद्द्रुतचित्तप्रविष्टो विषयाकारोऽनपायोऽस्मात्स्थायी-भावः ॥

भगवन्तं विभुं नित्यं पूर्णं बोधसुखात्मकम् ।
यद्गृह्णाति द्रुतं चित्तं किमन्यदवशिष्यते ॥ २८ ॥

विभुमिति सर्व्वदेशव्यापकत्वं, नित्यमिति सर्व्वकालव्याप-कत्वं, पूर्णमित्याद्वितीयतया सर्व्वद्वैतप्रमाधिष्ठानत्वं, बोधसुखात्मक-मिति निरातिशयपुमर्थत्वं दर्शितम्, एतादृशेन भगवदाकारेण मनोगतेनानादिकाल-प्रविष्टासङ्ख्य-विषयाकाराणां कवली-करणात्तन्मात्रपरिस्फूर्त्या कृतकृत्यो भवतीत्यर्थः ।

द्रवीभावस्य प्रयोजनं पूर्व्वोक्तमेव स्मारयति तत्र प्रयत्नदार्ढ्याय;-

कठिना शिथिला वा धीर्न गृह्णाति न वास्यते ।
उपेक्ष्याज्ञानमित्याहुस्तद्बुधाः प्रसरादिषु ॥ २९ ॥

कठिना धीर्न गृह्णात्येव शिथिला तु गृह्णात्यपि न वास्यते द्रवीभावाभावात् इति पूर्व्वमेवोक्तं, द्रवीभावः काठिन्यमीषद्द्रवत्वं शैथिल्यं, तच्च द्रवावस्थाकार्य्यभूतसात्त्विकभावादित्यवसेयम्, ते च

स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः ।
वैवर्ण्यमश्रुप्रलय इत्यष्टौ सात्त्विका गुणाः ॥

[ साहि० द० । ३ ,प ]

इत्यभिप्रायः, अतएव भगवद्विषये काठिन्यं निन्द्यते ।

तदश्मसारं हृदयं वतेदं यद्गृह्यमाणैर्हरिनामधेयैः ।
न विक्रियेताथ यदा विकारो नेत्रे जलं गात्ररुहेषु हर्षः ॥

[ भा० २ स्क० । ३ अ० । २४ ]

कथं विना रोमहर्षं द्रवता चेतसा विना ।
विनानन्दाश्रुकलया शुद्ध्येद्भक्त्या विनाशयः ॥

[ भा० ११ स्क० । १४ अ० । २३ ]

भक्तिश्च द्रवता चेतसा विना कथं स्यात् ? द्रवच्चित्तश्च कथं रोमहर्षमानन्दाश्रु विना जायते इत्यर्थः । अश्रु-पलकयोरभिधानं स्तम्भस्वेदादीनामप्युपलक्षणम्, यतो द्रवत्वाभावे चित्तं न वास्यतेऽतो बुधाः पण्डिताः कामक्रोधादिना स्पन्दीभूतं पतितया पाषाणादिज्ञानमुपेक्ष्याज्ञानं संस्काराजनकमित्याहुः ।

तथा चाहुर्न्यायवार्त्तिककृतः;—

"यन्न सुखसाधनं न दुःखसाधनं तदेवोपेक्षणीय"मिति सुखसाधने रागः संस्कारहेतुर्दुःखसाधने द्वेषस्तथा तदुभयाभावे तु चित्तद्रवत्वाभावान्न जायते यद्दुःसंस्कार इत्यर्थः, एतावान् हि सर्व्वेषां शास्त्राणां रहस्यभूतोऽर्थः यद्विषयाकारता निराकरणपूर्व्वकं चित्तस्य भगवदाकारतासम्पादनम् सर्व्वेषामपि शास्त्राणामत्रैव व्यापारभेदेन पर्य्यवसानात् नत्वनादिकाले द्रवचित्ते प्रविष्टतत्तादिष्टानिष्टविषयकोटिसङ्कीर्णताचित्तस्य स्वभावभूताशीततेव तोयस्योष्णतेव दहनस्य सञ्चरिष्णुतेव पवनस्य कथं निवर्त्ततां धर्म्मिणि सत्यं सति वा स्वभावानुपमर्दादित्यत आह—

काठिन्यं विषये कुर्य्याद्द्रवत्वं भगवत्पदे ।
उपायैः शास्त्रनिर्दिष्टैरनुक्षणमतो बुधाः ॥ ३० ॥

विषयाकारता हीनचित्तस्य स्वभावभूता तस्या आगन्तुक-हेतुजन्यत्वात्, तथाहि स्थूलविषयाकारताहेतुरिन्द्रियसन्निकर्षादिजागरणे, सूक्ष्मविषयाकरताहेतुर्मनोगतवासना स्वप्ने, तदुभयाभावे तु सुषुप्तिवन्निर्व्विषयमेव चित्तं भवति, सुषुप्तौ चित्तलयाभिधानं निर्व्विषयकत्वाभिप्रायमेव एतच्च भगवता सूत्रकारेणैव प्रदर्शितम्—

"तदापीतेः संसारव्यपदेशात्" (ब्रह्मसू।४।२।८सू। अप्रीतिर्लयः मर्य्यादायामाङ् अप्रीतिं लयं मर्य्यादीकृत्य तस्य मनसो लयात् पूर्व्वकाले संसारव्यपदेशः, न तु तल्लये सतीति सूत्रार्थः तथाच सुषुप्तावपि पुनरुत्थानेन संसारव्यपदेशस्य सत्त्वान्न मनोलयः विवरणकाराणान्तु केयं सूक्ष्मता नागेत्यगदिना मनोलयाभिधानं तत्परमत-खण्डनाभिप्रायेण न तु स्वमतानुसारेण सूत्रविरोधादिति भावः ।

भववदाकारता तु चित्तस्य स्वाभाविकी तस्य कारणीभूत-सूक्ष्मकारणानिर्वचनीय-विचित्रानेक-शक्तिमन्मायाधिष्ठानस्य विभोः सर्व्वान्तर्य्यामिणः सर्व्वत्रानुगतत्वात् यथा घटस्य जलादिपूर्णताकारणता साध्या आकाशपूर्णता तु स्वतस्तस्य सर्व्वव्यापकत्वाच्चद्वत् तदुक्तं वार्त्तिककारपादैः,—

वियद्वस्तुस्वभावानुरोधादेव न कारकात् ।
विपत्सम्पूर्णतोत्पत्तौ कुम्भस्येव दशा धियाम् ॥

घटदुःखादिरूपत्वं धियां धर्म्मादिहेतुता ।
स्वतः सिद्धात्मसम्बोधव्याप्तिर्वस्त्वनुरोधतः ॥ इति

चित्तस्य भगवदाकारतायाः स्वाभाविकत्वेन हेत्वनपेक्षायां शास्त्रस्य क्वोपयोग इति चेत् अन्याकारताविरोधिभगवदाकारता-सम्पादनमित्यवेहि। या हि स्वाभाविकी भगवदाकारता चित्तस्य विषयाकारतासहचरितत्वात् तत्साधकत्वाच्च न तद्विरोधिनी शास्त्रजन्या तु साधनोपक्रमे परोक्षे भासमानाभ्यासक्रमेण विषया-कारतां शनैः शनैस्तिरोदधती····साधनपरिपाकेणापरोक्षतां नीता सती तां समूलघातमुपहन्ति अतएवोक्तम्–

यर्ह्यब्जनाभ-चरणैषणयोरुभक्त्या
चेतोमलानि विधमेद्गुण-कर्म्मजानि ।
तस्मिन् विशुद्ध उपलभ्यत आत्मतत्त्वं
साक्षाद्यथा ऽमलदृशोः सवितुः प्रकाशः ॥

[ भा० । ११ स्क० । ३ अ० । ४० ]

यथाग्निना हेममलं जहाति
ध्मातं पुनः सम्भजते च रूपम् ।
आत्मा च कर्म्मानुशयं विधूय
मद्भक्तियोगेन भजत्यथो माम् ॥
यथा यथात्मा परिमृज्यतेऽसौ
मत्पुण्यगाथा-श्रवणाभिधानैः ।
तथा तथा पश्यति वस्तुसूक्ष्मम्
चक्षुर्यथैवाञ्जनसम्प्रयुक्तम् ॥

विषयान् ध्यायतश्चित्तं विषयेषु विषज्जते ।
मामेव (मनु) स्मरताश्चित्तं मय्येव प्रविलीयते ॥
तस्मादसदभिध्यानं यथा स्वप्न-मनोरथम् ।
हित्वा मयि समाधत्स्व मनो मद्भावभावितम् ॥
[ भा० । ११ स्क० । १४ अ० । २५—२८ ]

एतावान् योग आदिष्टो मच्छिष्यैः शनकादिभिः ।
सर्व्वतो मन आकृष्य मय्यद्धा वेश्यते यथा ॥
[ भा० । ११ स्क० । १३ अ० । १४ ]

स च कपिलदेवेनोक्तः—

अनिमित्तनिमित्तेन स्वधर्म्मेणामलात्मना ।
तीव्रया मयि भक्त्या च श्रुतसंम्भृतया चिरम् ॥
ज्ञानेन दृष्टतत्त्वेन वैराग्येण बलीयसा ।
तपोयुक्तेन योगेन तीव्रेणात्मसमाधिना ॥
प्रकृतिः पुरुषस्येह दह्यमाना त्वहर्निशम् ।
तिरोभवित्री शनकैरग्नेर्योनिरिवारणिः ॥
[ भा० । ३ स्क० । २७ अ० । २१-२२-२३ ]

प्रकृतिः स्वाभाविकी विषयाकारतेत्यर्थः । हंसगीतासु च

गुणेष्वाविशते चेतो गुणाश्चेतसि च प्रभो ! ।
कथमन्योऽन्यसन्त्यागो मुमुक्षोरतितितीर्षोः ॥
[ भा० ११ स्क० १३ अ० । १७ ]

इति शनकादिप्रश्नस्योत्तरम् भगवानुवाच;—

मनसा वचसा दृष्ट्या गृह्यतेऽन्यैरपीन्द्रियैः ।
अहमेव न मत्तोऽन्यादिति बुध्यध्वमञ्जसा ॥
[ भा० । ११ स्क० । १३ अ० । २४ ]

जाग्रत्-स्वप्न-सुषुप्तञ्च गुणतो बुद्धिवृत्तयः ।
तासां विलक्षणो जीवः साक्षित्वेन व्यवस्थितः ॥
यर्हि संसृतिबन्धोऽयमात्मनो गुणवृत्तिदः ।
मयि तुर्य्ये स्थितो जह्यात् त्यागस्तद्गुणचेतसाम् ॥
अहङ्कारकृतं बन्धमात्मनोऽर्थविपर्य्ययम् ।
विद्वान् निर्विद्य संसारचिन्तां तुर्य्ये स्थितस्त्यजेत् ॥
यावन्नानार्थधीः पुंसो न निवर्त्तेत युक्तिभिः ।
जागर्त्यपि स्वपन्नज्ञः स्वप्ने जागरणं यथा ॥
असत्त्वादात्मनोऽन्येषां भावानां तत्कृताभिदा ।
गतयो हेतवश्चास्य मृषा स्वप्नधियो(दृशे) यथा ॥
यो जागरे वहिरनुक्षणधर्म्मिणोऽर्थान्
भुङ्क्ते समस्तकरणैर्हृदि तत्सदृक्षान् ।
स्वप्ने सुषुप्त उपसंहरते स एकः
स्मृत्यन्वयात्त्रिगुणवृत्तिदृगिन्द्रियेशः ॥
एवं विमृश्य गुणतो मनसः स्त्र्यवस्था
मन्मायया मयि कृता इति निश्चितार्थाः ।
संछिद्य हार्दमनुमानसदुक्तितीक्ष्ण-
ज्ञानासिना भजत माऽखिलसंशयाधिम् ॥

[ भा० । ११ स्क० । १३अ० । २७—३३

एवं जिज्ञासयापोह्य नानात्वभ्रममात्मनि ।
उपारमेत विरजं (तं) मनो मय्यर्प्य सर्व्वगे ॥ इत्यादि ।

[ भा० । ११ स्क० । ११ अ० । २१ ]

अयमत्र निष्कर्षः ;—चित्तेष्वाकारसमर्पका विषयास्ते

भगवद्व्यतिरिक्ता न भवन्ति भगवत्यध्यस्तत्वात्। भगवत एव सद्रूपतया घटः सन् पटः सन्नित्यादि सदाकारेणैव सर्व्वविषयाणां स्फुरणात्। "सर्व्वं खल्विदं ब्रह्म तज्जलानि" [छान्द०। ३।१४।१] इति श्रुत्या भगवदेकोद्भवत्व-भगवदेक-स्थितत्व-भगवदेकलयत्वेन मृद्घटवदभेदबोधनात् [१]। स्वप्नादि-प्रपञ्चवद्बाध्यत्वाच्च। अतएव भगवदाकारस्फुर्त्त्या ते सर्व्वे निवर्त्तमानाः सद्रूपा(स्तद्रूपा) एव भवन्ति। अधिष्ठानज्ञाननिवर्त्त्य-त्वादध्यस्तानाम्। एवं सति विषयनिष्ठः सर्व्वोऽपि प्रेमा भगवत्येवार्पितो भवति तद्व्यतिरिक्तास्फुरणात्; एतादृशी-वावस्था [चावस्था] प्रह्लादेन प्रार्थिता;—

या प्रीतिरविवेकानां विषयेष्वनपायिनी।
त्वामनुस्मरतः सा मे हृदयान्मापसर्प्पतु॥ इति
[वि०। पु०। १ अंश०। २० अ० १६]

तस्मादेतादृशयुक्त्यनुसन्धानेन सर्व्वाधिष्ठानसन्मात्रं परिपूर्ण-सच्चिदानन्दघनं भगवन्तमद्वयमात्मानं निश्चिन्वता स्वाप्निकविषये-ष्विव जाग्रतविषयेष्वप्यनुगम्यनुसन्धानेन [२] वैराग्यं महदुपजा-यते वशीकाराख्यम्, एतच्च सूत्रितं भगवता पतञ्जलिना;— "दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम्" इति
(पात०। १५। सु०)

चतुर्व्विधं हि वैराग्यं साध्य-साधन-भावापन्नमागमप्रसिद्धम्; तत्र महता प्रयासेनापि चित्तदोषानवश्यं निराकरिष्यामी-त्यध्यवसायात्मकं प्रथमं यतमानसंज्ञा वैराग्यम्। ततो निरन्तर-मुपायानुष्ठाने क्रियमाणे एतावन्तो दोषा इदानीं क्षीणा

[१] "मृद्घटवदभेदबोधनात्" इति च पाठोऽदृश्यत।
[२] जाग्रद्विषयेऽपि तुच्छत्वानुसन्धानेन इति पाठान्तरं।

एतावन्तश्चावशिष्यन्त इति चिकित्सकवत्[१] प्रतिक्षणमवधानं द्वितीयं व्यतिरेकसंज्ञा वैराग्यम्; एवं प्रतिक्षणं भूमिकाद्वयाभ्यासं कुर्व्वतः सर्व्वतोभावेन बहिरिन्द्रियाणां विषयेष्वप्रवृत्तिर्यान्तःकरणवासनायां सत्यामपि सा तृतीयमेवेन्द्रियसंज्ञा वैराग्यम्। एवं भूमिकात्रयाभ्यासाद्दृष्टेषु वनितादिष्वानुश्रविकेषु स्वर्गादिषु चान्द्रियैर्गृह्यमाणेष्वपि दोषदर्शनपरिपाकजन्यास्पृहात्मिका या चित्तवृत्तिः सा चतुर्थं वशीकारसंज्ञा वैराग्यम्। तदपि द्विविधमपरं परञ्च; द्वितीयं सूत्रितं पतञ्जलिना;— "तत्परं पुरुषख्यातेर्गुणवैतृष्ण्यम्"। [पात० ।१६ सू०] इति पुरुषख्यातिरात्मज्ञानं तदनन्तरं यद्गुणेषु शब्दादिषु (राष्ट्रादिविषयेषु) वैतृष्ण्यं वैराग्यं तत्परं श्रेष्ठफलरूपं त्वात्, ततः पूर्व्वन्त्वरं साधनरूपत्वादित्यर्थः, तस्य च लिङ्गमितरफलनिरपेक्षत्वेन मोक्षमात्रस्पृहालुत्वम्, यथा मुचुकुन्दस्य;—

न कामयेऽहं (न्यं) तव पादसेवना-
दकिञ्चनप्रार्थ्यतमाद्वरं विभो!।
आराध्य कस्त्वामपवर्गदं हरे!
वृणीत आर्य्यो वरमात्मबन्धनम्॥
तस्माद्विसृज्याशिष ईश! सर्व्वशो तः)
रजस्तमःसत्त्वगुणानुबन्धनाः।
निरञ्जनं (न्तरं) निर्गुणमद्वयं परं
त्वां ज्ञप्तिमात्रं पुरुषं व्रजाम्यहम्॥
चिरमिह वृजिनार्त्तस्तप्यमानोऽनुतापै-
रवितृषषडमित्रोऽलब्धशान्तिः कथञ्चित्॥

[१] "चिकित्सावत्" इति च दृश्यते पुस्तकान्तरे।

शरणद ! समुपेतस्त्वत्पदाब्जं परात्मन् !
अभयममृतशोकं पाहि मापन्नमीश ! ॥ इति ।

[ भा० । १० स्क० । ५१ अ० । ५५—५७ ]

एतादृशदशायाश्च भगवत्प्रेमानन्दपराकाष्ठामधिरोहतीति तं प्रति भगवतोक्तम् ;—

क्षात्रधर्म्मस्थितो जन्तूनवधीर्मृगयादिभिः ।
समाहितस्तत्तपसा जह्यघं मदुपाश्रयः ॥
जन्मन्यनन्तरे राजन् ! सर्व्वभूतसुहृत्तमः ।
भूत्वा द्विजवरस्त्वं वै मामन्ते ब्रह्म यास्यसि[१] ॥ इति ।

[ भा० । १० स्क० । ५१ अ० । ६२—६३ ]

अपरवैराग्यश्च सूत्रितम् तेन च न प्रेमकाष्ठेति न तदानीमेव कृतार्थता परवैराग्याभावेन भक्तिप्रकर्षाभावात् तस्यैव च कृतकृत्यताहेतुत्वादित्यर्थः । परवैराग्यलिङ्गं मोक्ष-पर्य्यन्तं सकलफलनिरपेक्षत्वं यथा—

इमं लोकं तथैवामुमात्मानमुभयायिनम् ।
आत्मानमनु ये चेह ये रायः पशवो गृहाः ॥
विसृज्य सर्व्वानन्यांश्च मामेवं विश्वतो मुखम् ।
भजन्त्यनन्यया भक्त्या तान् मृत्योरतिपारये ॥

[ भा० । ३ स्क० । ३५ अ० । ३६—४० ]

सालोक्य-सार्ष्टि-सामीप्य-सारूप्यैकत्वमप्युत ।
दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः ॥

[ भा० । ३ स्क० । २९ अ० । १३ ]

[१] "मामुपैष्यसि केवलं" इति पाठान्तरम्,

नैकात्मतां मे स्पृहयन्ति केचि-
न्मत्पादसेवाभिरता मदीहाः ।
येऽन्योऽन्यतो भागवताः प्रसज्य(ह्य)
सभाजयन्ते मम पौरुषाणि ॥

[ भा० । ३ स्क० । २५ अ० । ३४ ]

न पारमेष्ठ्यं न महेन्द्रधिष्ण्यं
न सार्व्वभौमं न रसाधिपत्यम् ।
न योगसिद्धीरपुनर्भवं वा
वाञ्छन्ति यत्पादरजः-प्रपन्नाः ॥

[ भा० । ११ स्क० । १४ अ० । १४ ]

प्रह्लादः—अहं त्वकामस्त्वद्भक्तस्त्वन्तु (श्च) स्वाम्यनपाश्रयः ।
नान्यथेहावयोरर्थो राजसेवकयोरिव ॥

[ भा ७ स्क० । १० अ० । ६ ]

पृथुः ;—न कामये नाथ ! तदप्यहं क्वचित् ( क्वचित्- )
न यत्र युष्मच्चरणाम्बुजासवः ।
महत्तमान्तर्हृदयान्मुखच्युतो
विधत्स्व कर्णायुतमेष मे वरः ॥

[ भाः । ४ स्क । २० अ० । २४ ]

ध्रुवः—या निर्वृतिस्तनुभृतां तव पादपद्म-
ध्यानाद्भवज्जनकथा-श्रवणेन वा स्यात् ।
सा ब्रह्मणि स्वमहिमन्यपि नाथ ! माभूत्
किन्त्वन्तकासिलुलितात् पततां विमानात् ॥

[ भा० । ४ स्क० । ९ अः । १० ]

महिष्यः ;—न वयं साध्वि ! साम्राज्यं स्वाराज्यं भौज्यमप्युत ।
वैराज्यं [ग्यं] पारमेष्ठ्यं वा [श्च] आनन्त्यं वा हरेः पदम् ॥
कामयामह एतस्य श्रीमत्पादरजःश्रियः ।
कुचकुङ्कुमगन्धाढ्यं मूर्द्ध्ना वोढुं गदाभृतः ॥
[ भा० १० स्क० । ८३ अ० । ४१—४२]

इन्द्रः—प्रत्यानीताः परम ! भवता त्रायतान्नः स्वभागा
दैत्याक्रान्तं हृदयकमलं त्वद्गृहं प्रत्यबोधि ।
कालग्रस्तं कियदिदमहो नाथ ! शुश्रूषतां ते
मुक्तिस्तेषां न हि वहुमता नारसिंहापरैः किम् ॥
[ भा० । ७०स्क० । ८ अ० । ४२]

तथा ;—यस्य भक्तिर्भगवति हरौ निःश्रेयसात्मनि[१] ।
विक्रीडतोऽमृताम्भोधौ किं तुच्छैः (क्षुद्रैः) खातकोदकैः ॥
[ भा० । ६ स्क । १२ अ । २२ ]

वृत्रः—न नाकपृष्ठं न च पारमेष्ठ्यं
न सार्व्वभौमं न रसाधिपत्यम् ।
न योगसिद्धीरपुनर्भवं वा
समञ्जस ! त्वा विरहय्य काङ्क्षे ॥
[ भा० । ६ स्क । ११ अः । २५ ]

श्रुतयः—दुरधिगमात्मतत्त्वनिगमाय तवात्ततनो-
श्चरितमहामृताब्धिपरिवर्त्तपरिश्रमणाः ।
न परिलषन्ति केचिदपवर्गमपीश्वर ! ते
चरणसरोजहंसकुलसङ्गविसृष्टगृहाः ॥
[ भा । १० स्कः । ८७ अः । २१ ]

[१] हरौ निःश्रेयसेश्वरे इति पाठान्तरं ।

एवमन्यदप्यूहनीयम्। एतादृशमाक्षेपपर्य्यन्त[१] सकलफलनिरपेक्षस्वरूपे परवैराग्ये सति फलान्तरे प्रेम्णोऽनुदयात् परमानन्दरूपे(ण) परमात्मन्येव प्रेमपराकाष्ठामारोहति। यथा वृत्रस्य—

अजातपक्षा इव मातरं खगाः
स्तन्यं यथा वत्सतराः क्षुधार्ताः ।
प्रियं प्रियेव व्युषितं विषण्णा ।
मनोऽरविन्दाक्ष दिदृक्षते त्वामिति ॥

[ भा० ६ स्क० । ११ अ० । २६ ]

अतएव ज्ञानं विना परवैराग्याभावात्तदृते च भगवत्प्रेमपरमकाष्ठाभावात्तदर्थं[२] ज्ञानवैराग्यं दृढीकर्त्तव्ये तदुक्तम्—

असेवयायं प्रकृतेर्गुणानां
ज्ञानेन वैराग्यविजृम्भितेन ।
योगेन मय्यर्पितया च भक्त्या
मां प्रत्यगात्मानमिहावरून्धे ॥

[ भा० । ३ स्क० । २५ अ० । २७ ]

ज्ञानवैराग्ययुक्तेन भक्तियोगेन योगिनः ।
क्षेमाय पादमूलं मे प्रविशन्त्यकुतोभयम् ॥

[ भा० । ३ स्क० । २५ अ० । ४३ ]

इत्युच्युताङ्घ्रिं भजतोऽनुवृत्त्या
भक्तिर्विरक्तिर्भगवत्प्रबोधः ।

---

[१] एतादृशे मोक्षपर्य्यन्तानिरपेक्षत्वलक्षणे इति पाठान्तरम्।
[२] परमाकाष्ठायां अनुदयात् इति पाठान्तरम्।

भवन्ति वै भागवतस्य राजन् ।
ततः परां शान्तिमुपैति साक्षात् ॥

[ भा० । ११ स्क० । २अ० । ४३ ]

भागवतस्य भगवद्धर्मानुष्ठातुः पुण्यगाथाश्रवणकर्त्तुः प्रथमं भगवत्प्रवोधस्ततः परं वैराग्यं ततः प्रेमलक्षणा भक्तिरित्यर्थः एतच्च दर्शितमुद्धवाय श्रीभगवता—

ज्ञानिनस्त्वहमेवेष्टः स्वार्थो हेतुश्च सम्मतः ।
स्वर्गश्चैवापवर्गश्च नान्योऽर्थो मदृते प्रियः ॥
ज्ञानविज्ञानसम्पन्नाः[१] पदं श्रेष्ठं विदुर्म्मम ।
ज्ञानी प्रियतमोऽतो मे ज्ञानेनासौ बिभर्ति माम् ॥

[ भा० । ११ स्क० । १९ अ० । २—३ ]

कीदृशं तज्ज्ञानमित्याकाङ्क्षायां सङ्क्षेपेण तदुक्तम्—

त्वय्युद्धवाश्रयति यस्त्रिविधो विकारो
मायान्तरापतति नाद्यपवर्गयोर्यत् ।
जन्मादयोऽस्य यदमी तव तस्य किं स्यु
राद्यन्तयोर्यदसतोऽस्ति तदेव मध्ये ॥

[ भा० । ११ स्क० । १९ अ० । ७ ]

भगवद्व्यतिरिक्तं सर्वं मायामयत्वात् स्वप्नवन्मायिकं तुच्छं दुःखरूपञ्च हेयं, भगवान् प्रत्यग्भिन्नपरमात्मैव सत्यः[२] स्वप्रकाशपरमानन्दरूपो नित्यो विभुश्चोपादेय इति स्वरूपं ज्ञानमित्यर्थः । भगवद्गीतासु च तदेवोक्तम्—

[१] ज्ञानविज्ञानसंसिद्धाः इति ज्ञानविज्ञानसम्बन्धात् इति पाठौ ।
[२] भगवान् इत्यतः सत्य इत्यन्तस्थले "भगवानेव सेव्य" इति कश्चित् पाठः ।

चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन ।
आर्त्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ॥
तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते ।
प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ॥
उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम् ।
आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिम् ॥
बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते ।
वासुदेवः सर्वमिति स महात्मा सुदुर्लभः ॥ इति ॥

गीता ७ अ० । १६ । १७ । १८ । १६ ।

वासुदेवातिरिक्तं सर्वं नास्ति मायिकत्वेन तुच्छत्वात् । वासुदेव एवात्मत्वात् प्रियतमः सत्यः स्थायिभाव इत्यर्थः एतादृशज्ञानपूर्वकवैराग्यश्च दर्शितम् ।

श्रुतिप्रत्यक्षमैतिह्यमनुमानं चतुष्टयम् ।
प्रमाणेष्वनवस्थानाद्विकल्पात् स विरज्यते ॥
कर्मणां परिणामित्वादाविरिञ्चयादमङ्गलम् ।
विपश्चिन्नश्वरं पश्येददृष्टमपि दृष्टवत् ।

[ भा० ११ स्क० । १६ अ० । १७—१८]

तथान्यत्र—

कर्माण्यारभमाणानां दुःखहत्यै सुखाय च ।
पश्येत् पाकविपर्य्यासं मिथुनीचारिणां नृणाम् ॥
नित्यार्त्तिदेन वित्तेन दुर्लभेनात्ममृत्युना ।
गृहापत्याप्तपशुभिः का प्रीतिः साधितैश्चलैः ॥

एवं लोकं परं विद्यान्नश्वरं कर्मनिर्मितम्।
सतुल्यातिशयध्वंसं यथा मण्डलवर्त्तिनाम्॥ इति।

[ भा० । ११ स्क० । ३ अ० । १८—२० ]

कीदृशी भगवद्धर्मानुष्ठातुर्ज्ञानवैराग्यपूर्विका भगवति भक्तिरुदेतीत्याकाङ्क्षायामुक्तम्—

यद्यनीशो धारयितुं मनो ब्रह्मणि निश्चलम्।
मयि कर्माणि सर्वाणि निरपेक्षः समाचर॥
श्रद्धालुर्मे कथाः शृण्वन् सुभद्रा लोकपावनीः।
गायन्ननुस्मरन् जन्म कर्मचाभिनयन् मुहुः॥
मदर्थे धर्मकामार्थानाचरन् मदपाश्रयः।
लभते निश्चलां भक्तिं मय्युद्धव सनातने॥

[ भा० । ११ स्क० । ११ अ० । २२—२४ ]

तथा—

भक्तियोगः पुरैवोक्तः प्रीयमाणाय तेऽनघ।
पुनश्च कथयिष्यामि मद्भक्तेः कारणं परम्॥
श्रद्धाऽमृतकथायां मे शश्वन्मदनुकीर्त्तनम्।
परिनिष्ठायान्तु पूजायां स्तुतिभिः स्तवनं मम॥
आदरः परिचर्य्यायां सर्व्वाङ्गैरभिवन्दनम्।
मद्भक्तपूजाभ्यधिका सर्व्वभूतेषु मन्मतिः॥
मदर्थेत्व(ष्व)ङ्गचेष्टा च वचसा मद्गुणेरणम्।
मय्यर्पणञ्च मनसः सर्व्वकाम-विवर्ज्जनम्॥

मदर्थेऽर्थपरित्यागो भोगस्य च सुखस्य च ।
इष्टं दत्तं हुतं जप्तं मदर्थं यद्व्रतं तपः ॥
एवं धर्म्मैर्मनुष्याणामुद्धवात्मनिवेदिनाम् ।
मयि सञ्जायते भक्तिः कोऽन्योऽर्थोऽस्यावशिष्यते ॥

[ भा० । ११ स्क० । १६ अ० । १६—२४ ]

तथान्यत्र—

तस्माद्गुरुं प्रपद्येत जिज्ञासुः श्रेय उत्तमम् ।
शाब्दे परे च निष्णातं ब्रह्मण्युपशमाश्रयम् ॥
तत्र भागवतान् धर्माञ्छिक्षेद्गुर्वात्मदैवतः ।
अमाययानुवृत्त्या यैस्तुष्येदात्मात्मदो हरिः ।
सर्वतो मनसो सङ्गमादौ सङ्गञ्च साधुषु ।
दयां मैत्रीं प्रश्रयञ्च भूते(ष्व)श्रद्धा यथोचितम् ॥
शौचं तपस्तितिक्षां च मौनं स्वाध्यायमार्जवम् ।
ब्रह्मचर्य्यमहिंसाञ्च समत्वं द्वन्द्वसंज्ञयोः ॥
सर्वत्रात्मेश्वरान् वीक्षां कैवल्यमनिकेतताम् ।
विविक्तं चीरवसनं सन्तोषं येन केनचित् ॥
श्रद्धां भागवते शास्त्रे निन्दामन्यत्र चापि हि ।
मनो वाक्काय(कर्म्म)दण्डञ्च सत्यं शम-दमावपि ॥
श्रवणं कीर्त्तनं ध्यानं हरेरद्भुतकर्मणः ।
जन्मकर्म्मगुणानाञ्च तदर्थेऽखिलचेष्टितम् ॥
इष्टं दत्तं तपो जप्तं वृत्तं यच्चात्मनः प्रियम् ।
दारान् सुतान् गृहान् प्राणान् यत् परस्मै निवेदनम् ॥

एवं कृष्णात्मनाथेषु मनुष्येषु च सौहृदम् ।
परिचर्य्यां चोभयत्र महत्सु नृषु साधुषु ॥
परस्परानुकथनं पावनं भगवद्यशः ।
मिथो रतिर्मिथस्तुष्टिर्निर्वृतिर्मिथ आत्मनः ॥
स्मरन्तः स्मारयन्तश्च मिथोऽघौघहरं हरिम् ।
भक्त्या सञ्जातया भक्त्या बिभ्रत्युत्पुलकां तनुम् ॥
क्वचिद्रुदन्त्यच्युतचिन्तया क्वचि
द्धसन्ति नन्दन्ति वदन्त्यलौकिकाः ।
नृत्यन्ति गायन्त्यनुशीलयन्त्यजं
भवन्ति तूष्णीं परमेत्य निर्वृताः ॥
इति भागवतान् धर्मान् शिक्षन्भक्त्यां (शिक्षन्) तदुत्थया ।
नारायणपरो मायामञ्जस्तरति दुस्तरम् ॥ इति ।

[ भा० । ११ स्क० । ३ अ० । २१—३३ ]

तस्मादेवम्विधैः शास्त्रीयैरुपायैर्मनःशुद्धिं सम्पादयेदित्यर्थः, शास्त्रीयानेवोपायान् प्रतिपन्नजनबुद्धिसौकर्य्याय भूमिकाभेदेन वक्तुं प्रतिजानीते—

उपायाः प्रथमस्कन्धे नारदेनोपवर्णिताः ।
सङ्क्षेपात्तानहं वक्ष्ये भूमिभेदविभागतः ॥ ३१ ॥

स्पष्टं तानेवाह—

प्रथमं महतां सेवा तद्दयापात्रता ततः ।
श्रद्धाथ तेषां धर्मेषु ततो हरिगुणश्रुतिः ॥ ३२ ॥

ततो रत्यङ्कुरोत्पत्तिः स्वरूपाधिगतिस्ततः ।
प्रेमवृद्धिः परानन्दे तस्याथ स्फुरणं ततः ॥ ३३ ॥

भगवद्धर्मनिष्ठातः स्वस्मिंस्तद्गुणशालिता ।
प्रेम्णोऽथ परमा काष्ठेत्युदिता भक्तिभूमिका ॥ ३४ ॥

तथा व्यासनारदसंवादे नारदः--

अहं पुरातीतभवे भवं मुने ।
दास्याश्च कस्याश्चन वेदवादिनाम् ।
निरूपितो बालक एव योगिनां
शुश्रूषणे प्रावृषि निर्विविक्षताम् ॥
ते मय्यपेताखिलचापलेऽर्भके
दान्तेऽधृतक्रीडनकेऽनुवर्त्तिनि ।
चक्रुः कृपां यद्यपि तुल्यदर्शनाः
शुश्रूषमाणे मुनयोऽल्पभाषिणि ॥
उच्छिष्टलेपाननुमोदितो द्विजैः
सकृत्स्म भुञ्जे तदपास्तकिल्बिषः ।
एवं प्रवृत्तस्य विशुद्धचेतस
स्तद्धर्म एवात्मरुचिः प्रजायते ॥
तत्रान्वहं कृष्णकथाः प्रगायता
मनुग्रहेणाशृणवं मनोहराः ।
ताः श्रद्धया मेऽनुपदं विशृण्वतः
प्रियश्रवस्यङ्ग ममाभवद्रुचिः (रतिः) ॥

तस्मिंस्तदा लब्धरुचेर्महामते !
प्रियश्रवस्य स्खलिता मतिर्मम ।
य(त)याहमेतत् सदसत्स्व-मायया
पश्ये मयि ब्रह्मणि कल्पितं परे ॥
इत्थं शरत्प्रावृषिकावृतू हरे
र्विशृण्वतो मेऽनुसवं यशोऽमलम् ।
संकीर्त्यमानं मुनिभिर्महात्मभि
र्भक्तिः प्रवृत्तात्मरजस्तमोपहा ॥
तस्यैवं मेऽनुरक्तस्य प्रश्रितस्य हतैनसः ।
श्रद्दधानस्य बालस्य दान्तस्यानुचरस्य च ॥
ज्ञानं गुह्यतमं यत्तत् साक्षाद्भगवतोदितम् ।
अन्ववोचन् गमिष्यन्तः कृपयां दीनवत्सलाः ॥
येनैवाहं भगवतो वासुदेवस्य वेधसः ।
मायानुभावमविदं येन गच्छन्ति तत्पदम् ॥
एतत् संसूचितं ब्रह्मंस्त्वया यद्विचिकित्सितम्[१] ।
यदीश्वरे भगवति कर्म ब्रह्मणि भावितम् ॥
आमयो यश्च भूतानां जायते येन सुव्रत ।
तदेव ह्यामयं द्रव्यं न पुनाति चिकित्सितम् ॥
एवं नृणां क्रियायोगाः सर्वे संसृतिहेतवः ।
त एवात्मविनाशाय कल्पन्ते कल्पिताः परे ॥

[१] ब्रह्मं स्तापत्रयश्चिकित्सितम् । इति पाठान्तरम् ।

यदत्र क्रियते कर्म भगवत्परितोषणम् ।
ज्ञानं यत्तदधीनं हि भक्तियोगसमन्वितम् ॥
कुर्वाणा यत्र कर्माणि भगवच्छिक्षयासकृत् ।
गृह्ण(ण)न्ति गुण-नामानि कृष्णस्यानुस्मरन्ति च ॥
ॐ नमो भगवते तुभ्यं वासुदेवाय धीमहि ।
प्रद्युम्नायानिरुद्धाय नमः सङ्कर्षणाय च ॥
इति मूर्त्यभिधानेन मन्त्रमूर्त्तिममूर्त्तिकम् ।
यजते यज्ञपुरुषं स सम्यग्दर्शनः पुमान् ॥
इत्थं (मं) स्वनिगमं ब्रह्मन्नवेत्य मदनुष्ठितम् ।
अदान् मे ज्ञानमैश्वर्य्यं स्वस्मिन् भावञ्च केशवः ॥

[भाः । १ स्क । ५ अ० । २३—३६]

भगवत्सेवा द्विविधा, भगवद्भक्तसेवा साक्षाद्भगवत्सेवा च तत्राद्या यथा—

महत्सेवां द्वारमाहुर्विमुक्ते
स्तमोद्वारं योषितां सङ्गिसङ्गम् ।
महान्तस्ते समचित्ताः प्रशान्ता
विमन्यवः सुहृदः साधवो ये
ये वा मयीशे कृतसौहृदार्था
जनेषु देहम्भरवार्त्तिकेषु
गृहेषु जायात्मजरातिमत्सु
न प्रीतियुक्ता यावदर्थाश्च लोके ।

[भा० । ५ स्क० । ५ अः । २३]

तथा—

प्रसङ्गमजरं पाशमात्मनः कवयो विदुः ।
स एव साधुषु कृतो मोक्षद्वारमपावृतम् ॥
तितिक्षवः कारुणिकाः सुहृदः सर्वदेहिनाम् ।
अजातशत्रवः शान्ताः साधवः साधुभूषणाः ॥
मय्यनन्येन भावेन भक्तिं कुर्वन्ति ये दृढाम् ।
मत्कृते त्यक्तकर्माणस्त्यक्तस्वजनबान्धवाः ॥
मदाश्रयाः कथामृष्टाः शृण्वन्ति कथयन्ति च ।
तपन्ति विविधास्तापा नैतान् मद्गतचेतसः ॥
त एते साधवः साध्वि सर्वसङ्गविवर्जिताः ।
सङ्गस्तेष्वथ ते प्रार्थ्यः सङ्गदोषहरा हि ते ॥

[ भा । ३ स्कः । २५ अः । २०—२४ ]

तथा—

यत्पादसंश्रयाः सूत मुनयः प्रशमायना ।
सद्यः पुनन्त्युपस्पृष्टाः स्वर्धुन्यापोऽनुसेवया ॥

[ भा० । १ स्क । १ अ० । १५ ]

तुलयाम लवेनापि न स्वर्गं नापुनर्भवम् ।
भगवत्सङ्गिसङ्गस्य मर्त्यानां किमुताशिषः ॥

[ भा० । १ स्क० । १८अ० । १३ ]
[ भा० । ४ स्क० । ३० अ० । ३४ ]

तथा—

दुर्लभो मानुषो देहो देहिनां क्षणभङ्गुरः ।
तथापि दुर्लभं मन्ये वैकुण्ठप्रियदर्शनम् ॥

अत आत्यन्तिकं क्षेमं पृच्छामो भवतोऽनघाः ।
संसारेऽस्मिन् क्षणार्द्धोऽपि सत्सङ्गः सेवधिर्नृणाम् ॥

[ भा० ११ स्क० २ अ० । ७ ]

तथा—

न रोधयति मां योगो न सा‌ंख्यं धर्म उद्धव ।
न स्वाध्यायस्तपस्त्यागो नेष्टापूर्त्तं न दक्षिणाः ॥
व्रतानि यज्ञाश्छन्दांसि तीर्थानि नियमा यमाः ।
यथावरुन्धे सत्सङ्गः सर्व्वसङ्गापहो हि माम् ॥
सत्सङ्गेन हि दैतेया यातुधाना मृगाः खगाः ।
गन्धर्व्वाप्सरसो नागाः सिद्धाश्चारणगुह्यकाः ॥
विद्याधरा मनुष्येषु वैश्याः शूद्राः स्त्रियोऽन्त्यजाः ।
रजस्तमः-प्रकृतयस्तस्मिंस्तस्मिन् युगेऽनघ(युगे) ।
वहवो मत्पदं प्राप्तास्त्वाष्ट्रकाया धवादयः ॥

साक्षाद्भगवत्सेवा यथा—

वृषपर्व्वा वलिर्वाणो मयश्चाथ विभीषणः ।
सुग्रीवो हनुमानृक्षो गजो गृध्रो वणिक्पथः ॥
व्याधः कुब्जा व्रजे गोप्यो यज्ञपत्न्यस्तथापरे ।
ते नाधीतश्रुतिगणा नोपासितमहत्तमाः ॥
अव्रतातप्ततपसः(म) सत्सङ्गान्मामुपागताः ।
केवलेन हि भावेन गोप्यो गावो नगा मृगाः ॥

येऽन्ये मूढधियो नागाः सिद्धा मामीयुरञ्जसा ।
यं न योगेन साङ्ख्येन दानव्रततपोऽध्वरैः ।
व्याख्यास्वाधायसन्न्यासैः प्राप्नुयाद् यत्नवानपि ॥

[ भा० ११ स्क० । १२ अ० । १—६]

मत्कामा रमणं जारमस्वरूपविदोऽवलाः ।
ब्रह्म मां परमं प्रापुः सङ्गाच्छतसहस्रशः ॥
तस्मात् त्वमुद्धवोत्सृज्य चोदनां प्रतिचोदनाम् ।
प्रवृत्तिश्च निवृत्तिश्च श्रोतव्यं श्रुतमेव च ॥
मामेकमेव शरणमात्मानं सर्व्वदेहिनाम् ।
याहि सर्व्वात्मभावेन यास्यसि ह्यकुतोभयः ॥

[ भा । ११ स्कः । १२ अः । १३—१५ ]

तदयमत्र निकर्षः । भगवत्सङ्गं वा भगवत्सङ्गिसङ्गं वा यथा-योग्यमन्तरणे न भगवति भक्तिः उदेति । एवान्वांस्तु विशेषः, भगवत्सङ्गिनां कृतार्थत्वान्नान्यसङ्गापेक्षा । भगवत्साङ्गिसङ्गानान्तु विद्यत एव फलतया भगवत्सङ्गापेक्षेति व्याख्याता द्विविधा महत्सेवा । तद्दयापात्रता ततः । तेषां महतां स्वविषयात् स्वकीयैः सुशीलतादिगुणैर्भवन्ति ते च गुणा भवतोक्ताः—

कृपालुपकृततद्रोहस्तितिक्षुः सर्व्वदेहिनाम् ।
सदासारोऽनवद्यात्मा समः सर्व्वोपकारकः ॥
कामैरहतधीर्दान्तो मृदुः शुचिरकिञ्चनः
अनीहो मितभुक् शान्तः स्थिरो मच्छरणो मुनिः ॥

अप्रमत्तो गभीरात्मा धृतिमान् जितषड्गुणः ।
अमानी मानदः कल्पो मैत्रः कारुणिकः कविः ॥
[ भा० । ११ स्क० । ११ अ० । २९—३१ ]

तथा—

मदभिज्ञं गुरुं शान्तमुपासीत मदात्मकम् ॥
अमानी मत्सरो दक्षो निर्म्ममो दृढसौहृदः ।
असत्वरोऽर्थजिज्ञासुरनसूयुरमोघवाक् ॥
जायापत्यगृहक्षेत्र-स्वजनद्रविणादिषु ।
उदासीनः समं पश्यन् सर्व्वेष्वर्थमिवात्मनः ॥
[ भा० । ११ स्क० । १० अ० । ५—७ ]

इत्यादि उदाहरणं, प्रह्लादो यथा—

तस्य दैत्यपतेः पुत्राश्चत्वारः परमाद्भुताः ।
प्रह्लादोऽभूल्महांस्तेषां गुणैर्म्महदुपासकः ॥
ब्रह्मण्यः शीलसम्पन्नः सत्यसन्धो जितेन्द्रियः ।
आत्मवत् सर्व्वभूतानामेकः प्रियसुहृत्तमः ॥
दासवत् सन्नतार्य्याङ्घ्रिः पितृवत् दीनवत्सलः ।
भ्रातृवत् सदृशो स्निग्धो गुरुष्वीश्वरभावनः ।
विद्यार्थरूपजन्माढ्यो मानदम्भविवर्जितः ॥
नोद्विग्नचित्तो व्यसनेषु निस्पृहः
श्रुतेषु दृष्टेषु गुणेष्ववस्तुदृक् ।
दान्तेन्द्रियप्राणशरीरधीः सदा
प्रशान्तकामो रहितासुरोऽसुरः ॥
[ भा० । ७ स्क० । ४ अ० । ३०—३३ ]

एतादृशशिष्यगुणाभावे तु महत्तमसङ्गो निरर्थक इति तद्दयापात्रता भवति द्वितीया भूमिका। सा पि द्विविधा। स्वप्रपन्नानपेक्षा तत्सापेक्षा च तत्राद्या यथा--

तप्तहेमनिकायाभं सितिकण्ठं त्रिलोचनम् ।
प्रसादसुमुखं वीक्ष्य प्रणेमुर्जातकौतुकाः ॥
स तान् प्रपन्नार्त्तिहरो भगवान् धर्म्मवत्सलः ।
धर्म्मज्ञान् शीलसम्पन्नान् प्रीतान् प्रीत उवाच ह ॥

श्रीरुद्र उवाच ।

यूयं वेदिषदः पुत्त्रा विदितं वश्चिकीर्षितम् ।
अनुग्रहाय भद्रं व एवं मे दर्शनं कृतम् ॥
य परं रहसः(रंहसा) साक्षात् त्रिगुणाज्जीवसंज्ञितात् ।
भगवन्तं वासुदेवं प्रपन्नः स प्रियो हि मे ॥
स्वधर्म्मनिष्ठः शतजन्मभिः पुमान्
विरिञ्चतामेति ततः परं हि माम् ।
अव्याकृतं भागवतोऽथ वैष्णवं
पदं यथाहं विबुधाः कलात्यये ॥
अथ भागवता यूयं प्रियाः स्थ भगवान् यथा ।
न मद्भागवतानाञ्च प्रेयानन्योऽस्ति कर्हिचित् ॥
इदं विविक्तं जप्तव्यं पवित्रं मङ्गलं परम् ।
निःश्रेयसकरञ्चापि श्रूयतां तद्वदामि वः ॥
इत्यनुक्रोशहृदयो भगवानाह ताञ्छिवः ।
बद्धाञ्जलीन् राजपुत्त्रान् नारायणपरो वचः ॥

[भाः। ४ स्क। २४ अ०। २५—३२]

इत्यादौ रुद्रप्राचेतससंवादे यथा (वा)
ते मय्यपेताखिल चापलेऽर्भके ।

[भा० । १ स्क । ५ अ० । २४ ]

इत्यत्र स्वप्रयत्नापेक्षा यथा ध्रुवनारदसंवादे ध्रुवः—
सोऽयं शमो भगवता सुखदुःखहतात्मनाम् ।
दर्शितः कृपया पुंसां दुर्दर्शोऽस्मद्विधैस्तु यः ॥
अथापि मेऽविनीतस्य क्षात्त्रं धर्म्ममुपेयुषः ।
सुरुच्या दुर्व्वचोवाणैर्न भिन्ने श्रयते हृदि ।
पदं त्रिभुवनोत्कृष्टं जिगीषोः साधु वर्त्म मे ।
ब्रूह्यस्मत्पितृभिर्ब्रह्मन्नन्यैरप्यनधिष्ठितम् ॥
नूनं भवान् भगवतो योऽङ्गजः परमेष्ठिनः ।
(दुस्तरान्) वितुदन्नटते वीणां हिताय जगतोऽर्कवत् ॥
इत्युदीरितमाकर्ण्य भगवान् नारदस्तदा ।
प्रीतः प्रत्याह तं वालं सद्वाक्यमनुकम्पया ॥

श्रीनारद उवाच ।

जनन्याभिहितः पन्थाः स वै निःश्रेयसस्य ते ।
भगवान् वासुदेवस्त्वं भज तत् प्रवणात्मना ॥
धर्म्मार्थकाममोक्षाख्यं य इच्छेच्छ्रेय आत्मनः ।
एकं ह्येव हरेस्तत्र कारणं(केवलं) पादसेवनम् ॥
तत् तात गच्छ भद्रं ते यमुनायास्तटं शुचि ।
पुण्यं मधुवनं यत्र सान्निध्यं नित्यादा हरेः ॥

[ भा० । ४ स्क० । ८ अ० । ३५—४२ ]

इत्यादि । श्रद्धाथ तेषां धर्मेषु । पूर्वोक्तगुणसम्पन्नस्य महत्तमान् सेवमानस्य तादृशधर्मानुष्ठानादहमपि कृतार्थो भवेयामीति रुचिविशेषरूपा श्रद्धा तद्धर्मेषु भवति । ततश्च स्वयमनुतिष्ठति । तदुक्तम्—

शुश्रूषोः श्रद्दधानस्य वासुदेवकथारुचिः ।
स्यान्महत्सेवया विप्राः पुण्यतीर्थनिषेवणात् ॥
यदनुध्यासिना युक्ताः कर्म्म ग्रन्थिनिबन्धनम् ।
छिन्दन्ति कोविदास्तस्य को न कुर्य्यात् कथारतिम् ॥

[ भा० । १ स्क० । २ अ० । १५—१६ ]

ज्ञानं यदा प्रतिनिवृत्तगुणोर्म्मिचक्र-
मात्मप्रसाद उभयत्र गुणेष्वसङ्गः ।
कैवल्यसम्मतपथस्त्वथ भक्तियोगः
को निर्वृतो हरिकथासु रतिं न कुर्य्यात् ।

[ भा० । २ स्क० । ३ अः । १२ ]

इत्यादि । हरिकथापदमन्येषामपि भागवतधर्माणामुपलक्षणम् ।

यथाह ब्रह्मा—

तदस्तु मे नाथ स भूरिभागो
भवेऽत्र वान्यत्र तु वा तिरश्चाम् ।
येनाहमेकोऽपि भवज्जनानां
भूत्वा निषेवे तव पादपल्लवम् ॥

[ भा० । १० स्क । १४ अः । ३० ]

इत्यत्र पादसेवनम् । एवमन्यदप्यूह्यम् । इयञ्च श्रद्धा साधनपरिपाकेन वर्द्धमानैहिकामुष्मिकसर्व्वविषयारुचिमुपजनयन्ती बुभुक्षेव भक्षामात्रैकशरणं भगवद्धर्म्माचरणैकजीवनं पुण्यमापादयति ।

तथा परीक्षितः—

नैषातिदुःसहा क्षुन्मां त्यक्तोदमपि बाधते ।
पिबन्तं त्वन्मुखाम्भोज-च्युतं हरिकथामृतम् ॥

[ भा० १० स्क० । १ अ० । १३ ]

इत्यादि । अथवा शौनकादीनाम्—

आयुर्हरति वै पुंसामुद्यन्नस्तञ्च यन्नसौ ।
तस्यर्त्ते यः क्षणो नीत उत्तमःश्लोकवार्त्तया ॥

[ भा० । २ स्क० । ३ अ० । १७ ]

विले वतोरुक्रमविक्रमान् ये
न शृण्वतः कर्णपुटे नरस्य ।
जिह्वासती दार्दुरिकेव सूत
न चोपगायन्त्युरुगायगाथाः ॥
भारः परं पट्टकिरीटजुष्ट-
मप्युत्तमाङ्गं न नमेन्मुकुन्दम् ।
शावौ करौ नो कुरुतः सपर्य्यां
हरेर्लसत्काञ्चनकङ्कणौ वा ॥
वर्हायिते ते नयने नराणां
लिङ्गानि विष्णोर्न निरीक्षतो ये ।

पादौ नृणां तौ द्रुमजन्मभाजौ
क्षेत्राणि नानुव्रजतो हरेर्यौ ॥
जीवञ्छवो भागवताङ्घ्रिरेणून्
न जातु मर्त्त्योऽभिलभेत यस्तु ।
श्रीविष्णुपद्या मनुजस्तुलस्याः
श्वसञ्छवो यस्तु न वेद गन्धम् ॥
तदश्मसारं हृदयं बतेदं
यद्गृह्यमाणैर्हरिनामधेयैः ।
न विक्रियेताथ यदा विकारो
नेत्रे जलं गात्ररुहेषु हर्षः ॥

[ भा० २ स्क० । ३ अ० । २०—२४ ]

इत्यादिश्रद्धाविहीनास्तु विषयभोगपराः केचित् पाण्डित्यादिगर्वेण भगवद्भक्तनिन्दापराः सन्तो निरयेऽपि निन्दनीया एव ते भवन्ति । तत्र प्रथमे यथा--

यत्र(न्न) व्रजन्त्यघभिदो रचनानुवादा-
च्छृण्वन्ति येऽन्यविषयः कुकथामतिघ्नीः ।
यास्तु श्रुता हतभगैर्नृभिरात्तसारा-
स्तांस्तान् क्षिपन्त्यशरणेषु तमःसु हन्त ॥

[ भा ३ स्क० । १५ अ० । २३ ]

तरवः किं न जीवन्ति भस्त्राः किं न श्वसन्त्युत ।
न खादन्ति न मेहन्ति किं ग्रामपशवोऽपरे ॥

श्वविड्वराहोष्ट्रखरैः संस्तुतः पुरुषः पशुः ।
न यत्कर्णपथोपेतो जातु नाम गदाग्रजः ॥

[ भाः । २ स्क । ३ अ० । १८—१९ ]

इत्यादि । भगवद्भक्तनिन्दापरा यथा—
मुखबाहूरुपादेभ्यः पुरुषस्याश्रमैः सह ।
चत्वारो जज्ञिरे वर्णा गुणैर्विप्रादयः पृथक् ॥
य (एवमीश्वरं) एषां पुरुषं साक्षादात्मप्रभवमीश्वरम् ।
न भजन्त्यवजानन्ति स्थानाद्भ्रष्टाः पतन्त्यधः ॥
दूरे हरिकथाः केचिद्दूरे चाच्युतकीर्त्तनाः ।
स्त्रियः शूद्रादयश्चैव तेऽनुकम्प्या भवादृशाम् ॥

[ भा० ११ स्क० । ५ अ० । २—४ ]

रजसा घोरसङ्कल्पाः कामुका अहिमन्यवः ।
दाम्भिका मानिनः पापा विहसन्त्यच्युतप्रियान् ॥
वदन्ति तेऽन्योन्यमुपासि(क्षि)तास्त्रियो
गृहेषु मैथुन्यपरेषु चाशिषः ।
यजन्त्यसृष्टान्नविधानदक्षिणं
वृत्त्यै परं घ्नन्ति पशूनतद्विदः ॥
श्रिया विभूत्याभिजनेन विद्यया
त्यागेन रूपेण बलेन कर्म्मणा ।
जातस्मयेनान्धधियः सहेश्वरान्
सतोऽवमन्यन्ति हरिप्रियान् खलाः ॥

सर्व्वेषु शश्वत् तनुभृत्स्ववस्थितं
यथा स्वमात्मानमभीष्टमीश्वरम् ।
वेदोपगीतञ्च न शृण्वतेऽबुधा
मनोरथानां प्रवदन्ति वार्त्तया ॥

[ भा० । ११ स्क० । ५ अ० । ७—१० ]

हित्वा(१)त्यायासराचिता गृहापत्यसुहृच्छ्रियः ।
तमो विशन्त्यनिच्छन्तो वासुदेवपराङ्मुखाः ॥

[ भा ११ स्क० । ५ अ० । १८ ]

न भजति कुमनीषिणां स इज्यां
हरिरधनात्मधनप्रियो रसज्ञः ।
श्रुतधनकुलकर्म्मणां मदैर्ये
विदधति पापमकिञ्चनेषु सत्सु ॥

[ भा० । ४ स्क० । ३१ अ० । २१ ]

एवमन्यदप्यूहनीयम् । तस्माद्भगवद्धर्म्मश्रद्धा भवति तृतीया भूमिका । ततो हरिगुणा श्रुतिः । यथा—

इत्थं परस्य निजवर्त्मरिरक्षयात्त-
लीलातनोस्तदनुरूपविडम्बनानि ।
कर्म्माणि कर्म्मकषणानि यदूत्तमस्य
श्रूयादमुष्य पदयोरनुवृत्तिमिच्छन् ॥

---

[१] हित्वाथमायारचिता इति पाठान्तरम् ।

(१)मर्त्त्यस्तयानुसवमेधितया मुकुन्द-
श्रीमत्कथाश्रवणकीर्त्तनचिन्तयेति ।
तद्धाम दुस्तरकृतान्तजयापवर्गं
ग्रामाद्वनं क्षितिभुजोऽपि ययु(स्त)र्यदर्थाः ॥

[ भा । १० स्कः । ६० अः । ४६—५० ]

संसारसिन्धुमतिदुस्तरमुत्तितीर्षो-
र्नान्यः प्लवो भगवतः पुरुषोत्तमस्य ।
लीलाकथारसनिषेवणमन्तरेण
पुंसो भवेद्विविधदुःखदवार्द्दितस्य ॥

[ भा०। १२ स्क०। ४ अ०। ४ ]

निवृत्ततर्षैरुपगीयमाना-
द्भवौषधाच्छ्रोत्रमनोऽभिरामात् ।
क उत्तमःश्लोकगुणानुवादात्
पुमान् विरज्येत विनापशुघ्नात् ॥

[ भा०। १० स्क०। १ अ०। ४ ]

हरिगुणश्रुतिरिति कृष्णभागवतधर्म्मोपलक्षणम् ।

तथाच—

को नु राजन्निन्द्रियवान् मुकुन्दचरणाम्बुजम् ।
न भजेत् सर्व्वतोमृत्युरुपास्यममरोत्तमैः ॥

[ भा० । ११ स्क । २ अः । २ ]

[१] मर्त्त्यस्तया ननु समेधितया इति पाठान्तरम् ।

तच्च भजनं विवृत्तम् ।

श्रवणं कीर्त्तनं विष्णोः स्मरणं पादसेवनम् ।
अर्च्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ॥
इति पुंसार्पिता विष्णौ भक्तिश्चेन्नवलक्षणा ।
क्रियेत भगवत्यद्धा तन्मन्येऽधीतमुत्तमम् ॥

[ भा० । ७ स्क० ५ अ० । २३—२४ ]

तदेवं संक्षिप्तम्—

तस्माद् भारत ! सर्व्वात्मा भगवानीश्वरो हरिः ।
श्रोतव्यः कीर्त्तितव्यश्च स्मर्त्तव्यश्चेच्छताभयम् ॥

[ भा० । २ स्क । १ अ० । ५ ]

क्रमेणोदाहरणम्—

सङ्कीर्त्त्यमानो भगवाननन्तः
श्रुतानुभावो व्यसनं हि पुंसाम् ।
प्रविश्य चित्तं विधुनोत्यशेषं
यथा तमोऽर्कोऽभ्रमिवातिवातः ॥
मृषागिरस्ता ह्यसतीरसत्कथा
न कथ्यते यद्भगवानधोक्षजः ।
तदेव सत्यं तदिहैव मङ्गलं
तदेव पुण्यं भगवद्गुणोदयम् ॥
तदेव रम्यं रुचिरं नवं नवं
तदेव शश्वन्मनसो महोत्सवम् ।
तदेव शोकार्णवशोषणं नृणां
यदुत्तमःश्लोकयशोऽनुगीयते ॥

न तद्वचश्चित्रपदं हरेर्यशो
जगत्पवित्रं प्रगृणीत कर्हिचित् ।
तद्ध्वाङ्क्षतीर्थं नतु हंससेवितं
यत्राच्युतस्तत्र हि साधवोऽमलाः ॥

यद्वाग्विसर्गो जनताघसंप्लवो
यस्मिन् प्रतिश्लोकमवद्धवत्यपि ।
नामान्यनन्तस्य यशोऽङ्कितानि यत्
शृण्वन्ति गायन्ति गृणन्ति साधवः ॥

[ भा० । १२ स्क० । १२ अ० । ४८—५२ ]

यशःश्रियामेव परिश्रमः परो
वर्णाश्रमाचारतपःश्रुतादिषु ।
अविस्मृतिः श्रीधरपादपद्मयो-
र्गुणानुवादश्रवणादरादिभिः ॥

अविस्मृतिः कृष्णपदारविन्दयोः
क्षिणोत्यभद्राणि समं तनोति च ।
सत्त्वस्य शुद्धिं परमात्मभक्तिं
ज्ञानञ्च विज्ञानविरागयुक्तम् ॥

[ भा० । १२ स्क० । १२ अ० । ६४—६५ ]

स्मरतः पादकमलमात्मानमपि यच्छति
किंत्वर्थकामान् भजतो नान्याभीष्टान् जगद्गुरुः ।

दृष्टं तवाङ्घ्रियुगलं जनतापवर्गं
ब्रह्मादिभिर्हृदि विचिन्त्यमगाधबोधैः ।
संसारकूपपतितोत्तरणावलम्बं
ध्यायंश्चराम्यनुगृहाण यथा स्मृतिः स्यात् ॥

[ भा० । १० स्क० । ६९ अः । १८ ]

तं नः समादिशोपायं येन ते चरणाब्जयोः ।
स्मृतिर्यथा न विरमेदपि संसरतामिह ॥

[ भा० । १० स्क० । ७३ अ० । १५ ]

तस्माद्रजोरागविषादमन्यु-
मानस्पृहादैन्यभयाधिमूलम् ।
हित्वा गृहं संसृतिचक्रवालं
नृसिंहपादं भजताकुतोभयम् इति ॥

[ भा० । ५ स्क० । १८ अ० । १४ ]

अहो (वतैषां) अमीषां किमकारि शोभनं
प्रसन्न एषां स्विदुत स्वयं हरिः ।
यैर्जन्म लब्धं नृषु भारताजिरे
मुकुन्दसेवौपयिकं स्पृहा हि नः ॥

[भा० । ५ स्क० । १९ अ० । २०]

याः सम्पर्यचरन् प्रेम्णा पादसम्वाहनादिभिः ।
जगद्गुरुं भर्तृबुद्ध्या तासां किं वर्ण्यते तपः ॥

[वि० पु०]

वैदिकस्तान्त्रिको मिश्र इति मे त्रिविधो मखः ।
त्रयाणामीप्सितेनैव विधिना मां समर्च्चयेत् ॥

[ भा० । ११ स्क० । २७ अ० । ७ ]

एवं क्रियायोगपथैः पुमान् वैदिकतान्त्रिकैः ।
अर्च्चन्नुभयतः सिद्धिं मत्तो विन्दत्यभीप्सिताम् ॥

[ भा० । ११ स्क० । २७ अ० । ४९ ]

यत्पादयोरशठधीः सलिलं प्रदाय
दूर्वाङ्कुरैरपि विधाय सतीं सपर्य्याम् ।
अप्युत्तमां गतिमसौ भजते त्रिलोकीं
दाश्वानविक्लवमनाः कथमार्त्तिमृच्छेत् ॥

[ वि० पु० ]

अहो प्रणामाय कृतः समुद्यमः
प्रपन्नभक्तार्थविधौ समाहितः ।
यल्लोकपालैस्त्वदनुग्रहोऽमरै
रलब्धपूर्वोपसदे सुरेर्पितः ॥

[ वि० पु० ]

तत्तेऽनुकम्पां सुसमीक्षमाणो
भुञ्जान एवात्मकृतं विपाकम् ।
हृद्वाग्वपुर्भिर्विदधन्नमस्ते
जीवेत यो मुक्तिपदे स दायभाक् ॥

[ भा० । १० स्क० । १४ अ० । ८ ]

ममाद्यामङ्गलं नष्टं फलवांश्चैव मे भवः ।
यन्नमस्ये भगवतो योगिध्येयाङ्घ्रिपङ्कजम् ॥

[ भा० । १० स्क० । ३८ अ० । ६ ]

पतितः स्खलितो वार्त्तः क्षुत्त्वा वाप्यवशो गृधन् ।
हरये नम इत्युच्चैः मुच्यते घोरकिल्बिषात् ॥

[ भा० । १२ स्क० । १२ अ० । ४७ ]

नताः स्म ते नाथ पदारविन्दं
बुद्धीन्द्रियप्राणमनोवचोभिः ।
यच्चिन्त्यतेऽन्तर्हृदि भावयुक्तै-
र्मुमुक्षुभिः कर्ममयोरुपाशात् ॥

गीतासु च—

मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ॥

गीता १८ अ० । ६५ ।

यन्नामश्रुतिमात्रेण पुमान् भवति निर्मलः ।
तस्य तीर्थपदः किंवा दासानामवशिष्यते ॥

[ भा० । ९ स्क० । ५ अ० । १६ ]

किं चित्रमच्युत ! तवैतदशेषबन्धो !
दासेष्वनन्यशरणेषु यदात्मसात्त्वम् ।
योऽरोचयत्सह मृगैः स्वयमीश्वराणां
श्रीमत्किरीटतटपीडितपादपीठः ॥

[ भा० । ११ स्क० । २९ अ० । ४ ]

कायेन वाचा मनसेन्द्रियैर्वा
बुद्ध्यात्मना वानुसृतस्वभावात् ।
करोति यद्यत् सकलं परस्मै
नारायणायेति समर्पयेत् तत् ॥

[ भा० । ११ स्क० । २ अ० । ३६ ]

अहो भाग्यमहो भाग्यं नन्दगोपव्रजौकसाम् ।
यन्मित्रं परमानन्दं पूर्णं ब्रह्म सनातनम् ॥

[ भा० । १० स्क० । १४ अ० । ३२ ]

इत्थं सतां ब्रह्मसुखानुभूत्या
दास्यं गतानां परदैवतेन ।
मायाश्रितानां नरदारकेण
सा(र्द्धं)कं विजह्रुः कृतपुण्यपुञ्जाः ॥

[ भा० । १० स्क० । १२ अ० । ११ ]

मर्त्त्यो यदा त्यक्तसमस्तकर्म्मा
निवेदितात्मा विचिकीर्षितो मे ।
तदामृतत्वं प्रतिपद्यमानो
मयात्मभूयाय च कल्पते वै ॥

[ भा० । ११ स्क० । २६ अ० । ३४ ]

धर्म्मार्थकाम इति योऽभिहितस्त्रिवर्ग
ईक्षा त्रयी नयदमौ विविधा च वार्त्ता ।
मन्ये तदेतदखिलं निगमस्य सत्यं
स्वात्मार्पणं स्वसुहृदः परमस्य पुंसः ॥

[ भा० । ७ स्क० । ६ अ० । २६ ]

देवर्षिभूतात्मनृणां पितॄणां
न किङ्करो नायमृणी च राजन् ! ।
सर्व्वात्मना यः शरणं शरण्यं
[१]गतो मुकुन्दं परिहृत्य (कृत्य) कर्त्तम् ॥
[भा० । ११ स्क । ५ अ० । ४१ ]

तस्मादेवं रूपेण यथाशक्ति भागवतधर्म्मानुष्ठानं भवति चतुर्थभूमिका । एतच्चतुष्टयं साधनमेव । ततो रत्यङ्कुरोत्पत्तिः । भक्तिर्नाम भक्तिरसस्थायिभावो द्रुताचित्तप्रविष्टभगवदाकारता-रूपः संस्कारविशेष इति वक्ष्यते । स एव धर्म्मो भगवतो धर्म्मानुष्ठानात्मकबीजस्य । तदुक्तम्—

सतां प्रसङ्गान्मम वीर्य्यसंविदो
भवन्ति हृत्कर्णरसायनाः कथाः ।
तज्जोषणादाश्वपवर्गवर्त्मनि
श्रद्धा रतिर्भक्तिरनुक्रमिष्यति ॥
[भा० । ३ स्क० । २५ अ० । २५]

श्रद्धाभक्तिरसानुभवे ततो रतिः स्थायी भावः । ततः स एव भक्तिरसतां प्राप्तोऽनुक्रमेण भविष्यतीत्यर्थः ।

एवं मनः कर्म्मवशं प्रयुङ्क्ते
अविद्ययात्मन्युपधीयमाने ।
प्रीतिर्न यावन्मयि वासुदेवे
न मुच्यते देहयोगेन तावत् ॥
[भा० । ५ स्क० । ५ अ० । ६ ]

[१] नारायणं लोकगुरुं प्रपन्न इति पाठान्तरम् ।

भवापवर्गो भ्रमतो यदा भवे-
ज्जनस्य तर्ह्यच्युत ! सत्समागमः ।
सत्सङ्गमो यर्हि तदैव सद्गतौ
परावरेशे त्वयि जायते (रतिः) मतिः ॥

[ भा० । १० स्क० । ५१ अ० । ५३ ]

त्वयि मेऽनन्यविषया मतिर्मधुपतेऽसकृत् ।
रतिमुद्वहतादद्धा गङ्गेवौघमुदन्वति ॥

[ वि० पु० ]

कर्म्मभिर्भ्राम्यमाणानां यत्र क्वापीश्वरेच्छया ।
मङ्गलाचरितैर्दानै रतिर्नः कृष्ण ईश्वरे ॥

[ भा० । १० स्क० । ४७ अ० । ६७ ]

इयं पञ्चमी भूमिका। भक्तेः स्वरूपम् एतस्या एव परिपाकविशेषादन्याः षड् भूमिकाः फलभूताः । स्वरूपाधिगतिस्ततः । प्रत्यगात्मस्वरूपस्य स्थूलसूक्ष्मदेहद्वयातिरिक्तत्वेन साक्षात्कारः षष्ठी भूमिका। अन्यथा देहेन्द्रियादिविक्षेपेण जाताया अपि रतेरनिर्वाहात् । तदुक्तम्—

ज्ञानं निःश्रेयसार्थाय पुरुषस्यात्मदर्शनम् ।
यदाहुर्वर्णये तत्ते हृदयग्रन्थिभेदनम् ॥
अनादिरात्मा पुरुषो निर्गुणः प्रकृतेः परः ।
प्रत्यग्धामा स्वयं ज्योतिर्विश्वं येन समन्वितम् ॥
स एष प्रकृतिं सूक्ष्मां दैवीं गुणमयीं विभुः ।
यदृच्छयैवोपगतामभ्यपद्यत लीलया ॥

गुणैर्विचित्राः सृजतीं स्वरूपाः प्रकृतिं प्रजाः ।
विलोक्य मुमुहे सद्यः स इह ज्ञानगूहया ॥
[वि० पु० ]

एवं पराभिध्यानेन कर्त्तृत्वं प्रकृतेः पुमान् ।
कर्म्मसु क्रियमाणेषु गुणैरात्मनि मन्यते ॥
तदस्य संसृतिर्बन्धः पारतन्त्र्यश्च तत्कृतम् ।
भवत्यकर्त्तुरीशस्य साक्षिणो निर्वृतात्मनः ॥
[ भा० । ३ स्क० । २६ अ० । ६—७ ]

तथा—

आत्मा नित्योऽव्ययः शुद्ध एकः क्षेत्रज्ञ आश्रयः ।
अविक्रियः स्वदृग् हेतुर्व्यापकोऽसङ्ग्यनावृतः ॥
एतैर्द्वादशभिर्विद्वानात्मनो लक्षणैः परैः ।
अहं ममेत्यसद्भावं देहादौ मोहजं त्यजेत् ॥
[ भा । ७ स्क० । ७ अ० । १६—२० ]

एवं शुद्धे त्वं पदलक्ष्येऽवगते तत्पदलक्ष्येण सहाभेद-ज्ञानं भवति ॥ तदप्युक्तम्—

कृष्णमेनमवेहि त्वमात्मानमखिलात्मनाम् ।
जगद्धिताय सोऽप्यत्र देहीवाभाति मायया ॥
[ भा० १० स्क० १४ अ० । ५५ ]

इत्यादि । एतादृशज्ञानस्य च भक्त्युत्तरकालत्वं दर्शितम्—
वासुदेवे भगवति भक्तियोगः प्रयोजितः ।
जनयत्याशु वैराग्यं ज्ञानञ्च यदहैतुकम् ॥
[ भा० १ स्क० । २ अ० । ७ ]

श्रेयः(स्रुतिं श्रुतिं भक्तिमुदस्य ते विभो !
क्लिश्यन्ति ये केवलबोधलब्धये ।
तेषामसौ क्लेशल एव शिष्यते
नान्यद् यथा स्थूलतुषावघातिनाम् ॥

[ भा० । १० स्क । १४ अः । ४ ]

इत्यादि । एतादृशतत्त्वज्ञाने सति वैराग्यदार्ढ्याद् भगवति प्रेम्णो वृद्धिर्भवतीति सप्तमी भूमिका यथा—

न्यस्तक्रीडनको बालो जडवत् तन्मनस्तया ।
कृष्णग्रहगृहीतात्मा न वेद जगदीदृशम् ॥
आसीनः पर्य्यटन्नश्नन् शयानः प्रपिबन् ब्रुवन् ।
नानुसन्धत्त एतानि गोविन्दपरिरम्भितः ॥
क्वचिद्रुदति वैकुण्ठचिन्ताशवलचेतनः ।
क्वचिद्धसति तच्चिन्ताह्लाद उद्गायति क्वचित् ॥
नदति क्वचिदुत्कण्ठो विलज्जो नृत्याति क्वचित् ।
क्वचित् तद्भावनायुक्तस्तन्मयोऽनुचकार ह ॥
क्वचिदुत्पुलकस्तूष्णीमास्ते संस्पर्शनिर्वृतः ।
अस्पन्दप्रणयानन्दसलिलामीलितेक्षणः ॥
स उत्तमश्लोकपदारविन्दयो-
र्निषेवयाकिञ्चनसङ्गलब्धया ।
तन्वन् परां निर्वृतिमात्मनो मुहु-
र्दुःसङ्गदीनस्य मनःशमं व्यधात् ॥

।[ भा० । ७ स्क० ४ अ० । ३७—४२ ]

तथा—

एवं निर्ज्जितषड्वर्गैः क्रियते भक्तिरीश्वरे ।
वासुदेवे भगवति यया[१] संलभ्यते रतिः ॥

निशम्य कर्म्माणि गुणानतुल्यान्
वीर्य्याणि लीलातनुभिः कृतानि ।
यदातिहर्षोत्पुल(कश्र)काश्रुगद्गदं
प्रोत्कण्ठ उद्गायति रौति नृत्यति ॥
यदा ग्रहग्रस्त इव क्वचिद्धस-
त्याक्रन्दते ध्यायति वन्दते जनम् ।
मुहुः श्वसन् वक्ति हरे! जगत्पते!
नारायणेत्यात्म(म)गतिर्गतत्रपः ॥
तदा पुमान् मुक्तसमस्तबन्धन-
स्तद्भावभावानुकृताशयाकृतिः ।
निर्दग्धबीजा(कर्मा)नुशयो महीयसा
भक्तिप्रयोगेण समेत्यधोक्षजम् ॥
अधोक्षजाल(म्ब)म्भमिहाशुभात्मनः
शरीरिणः संसृतिचक्रशातनम् ।
तद्ब्रह्मनिर्व्वाणसुखं विदुर्बुधा-
स्ततो भजध्वं हृदये हृदीश्वरम् ॥

[ भा० । ७ स्क० । ७ अ० । ३३—३७ ]

[१] संलभेत रतिम् इति पाठान्तरम् ।

एवमन्यदप्यूहनीयम् । एतादृशस्य सप्तमीपर्यन्त एव साधनाभ्यासः। अतः परन्तु भूमिकाचतुष्टयमयत्नसाध्यम् । तस्याथ स्फुरणं ततः । तस्य प्रेमास्पदीभूतस्य भगवतः साक्षात्कारः प्रेमातिशयहेतुकोऽष्टमी भूमिका । तदुक्तम्—

नैकात्मतां मे स्पृहयन्ति केचि-
न्मत्पादसेवाभिरता मदीहाः ।
येऽन्योन्यतो भागवताः प्रसज्य (ह्य)
सभाजयन्ते मम पौरुषाणि ॥
पश्यन्ति ते मे रुचिराण्यम्ब ! सन्तः
प्रसन्नवक्त्रारुणलोचनानि ।
रूपाणि दिव्यानि वरप्रदानि
साकं वाचं स्पृहणीयां वदन्ति ॥
तैर्दर्शनीयावयवैरुदार-
विलासहासेक्षितवामसूक्तैः ।
हृतात्मनो हृतप्राणांश्च भक्ति-
रनिच्छतो गतिमण्वीं प्रयुङ्क्ते ॥

[ भा० । ३ स्क० । २५ अ० । ३४—३६ ]

एवमन्यदप्यूह्यम् । भगवद्धर्म्मनिष्ठाऽतः। यथा श्रीविष्णुपुराणे——

शालग्रामे महाभागो भगवन्न्यस्तमानसः ।
उवास रुचिरं कालं मैत्रेय ! पृथिवीपतिः ॥
अहिंसादिष्वशेषेषु गुणेषु गुणिनां वरः ।
अवाप परमां काष्ठां मनसश्चापि संयमे ॥

यज्ञेशाच्युत ! गोविन्द ! माधवानन्त ! केशव ! ।
कृष्ण ! विष्णो ! हृषीकेशेत्याह राजा स केवलम् ॥
नान्यज्जगाद मैत्रेय ! किञ्चित् स्वप्नान्तरेष्वपि ।
एतत्परं तदर्थञ्च विना नान्यदचिन्तयत् ॥
समित्पुष्पकुशादानं चक्रे देवक्रियाकृते ।
नान्यानि चक्रे कर्म्माणि निःसङ्गो योगतापसः ॥

[ वि० . पु० ]

पृथिवीपतिर्भरतः । श्रीभागवते च—

अम्बरीषो महाभागः सप्तद्वीपवतीं महीम् ।
अव्ययाञ्च श्रियं लब्ध्वा विभवञ्चातुलं भुवि ॥
मेनेऽतिदुर्लभं पुंसां सर्व्वं तत् स्वप्नसंस्तुतम् ।
विद्वान् विभवनिर्व्वाणं तमो विशति यत् पुमान् ॥
वासुदेवे भगवति तद्भक्तेषु च साधुषु ।
प्राप्तो भावं परं विश्वं येनेदं लोष्ट्र(ष्ट)वत्स्मृतम् ॥
स वै मनः कृष्णपदारविन्दयो-
र्वचांसि वैकुण्ठगुणानुवर्णने ।
करौ हरेर्मन्दिरमार्ज्जनादिषु
श्रुतिं चकाराच्युतसत्कथोदये ॥
मुकुन्दलिङ्गालयदर्शने दृशौ
तद्भृत्यगात्रस्पर्शेऽङ्गसङ्गमम् ।
घ्राणञ्च तत्पादसरोजसौरभे
श्रीमत्तुलस्या रसनां तदर्पिते ॥

पादौ हरेः क्षेत्रप(दोप)दानुसर्पणे
शिरो हृषीकेशपदाभिवन्दने ।
कामञ्च दास्ये नतु कामकाम्यया
य(दु)थोत्तमःश्लोकजनाश्रया रतिः ॥
एवं सदा कर्म्मकलापमात्मनः
परेऽधियज्ञे भगवत्यधोक्षजे ।
सर्व्वात्मभावं विदधन्महीमिमां
तन्निष्ठविप्राभिहितः शशास ह ॥

[भाः । ६ स्क० । ४ अ० । १८—२१]

यथा वा—

तं मोपयातं प्रतियन्तु विप्रा
गङ्गा च देवी धृतचित्तमीशे ।
द्विजोपसृष्टः कुहकस्तक्षको वा
दशत्वलं गायत विष्णुगाथाः ॥
पुनश्च भूयाद्भगवत्यनन्ते
रतिः प्रसङ्गश्च तदाश्रयेषु ।
महत्सु यां यामुपयामि सृष्टिं
मैत्र्यस्तु सर्व्वत्र नमो द्विजेभ्यः ॥
इति स्म राजाध्यवसाययुक्तः
प्राचीनमूलेषु कुशेषु धीरः ।
उदङ्मुखो दक्षिणकूल आस्ते
समुद्रपत्न्याः स्वसुतन्यस्तभारः ॥

[भा० १ स्क० । १९ अ० । १५—१७]

राजा परीक्षित् ।

एवञ्च (हि) तस्मिन् नरदेवदेवे
प्रायोपविष्टे दिवि देवसङ्घाः ।
प्रशस्य भूमौ व्यकिरन् प्रसूनै-
र्मुदा मुहुर्दुन्दुभयश्च नेदुः ॥

[ भा० । १ स्क० । १९ अ० । १८ ]

यथा वा—

वयन्त्विह महायोगिन् ! भ्रमन्तः कर्मवर्त्मसु ।
त्वद्वार्त्तया तरिष्यामस्तावकैर्दुस्तरं तमः ॥

[ भा० ११ स्क० । ६ अ० । ४८ ]

त्वयोपभुक्तस्रग्गन्धवासोऽलङ्कारचर्च्चिताः ।
उच्छिष्टभोजिनो दासास्तव मायां जयेम हि ॥

[ भा० । ११ स्क० । ६ अ० । ४६ ]

एवमन्यदप्यूहनीयम् । भगवद्धर्म्मनिष्ठा प्रयत्नपूर्विका साधनम् स्वतः सिद्धा तु भगवद्धर्म्मनिष्ठा भवति फलभूता नवमी भूमिका स्वस्मिंस्तद्गुणशालिता । यथा—

अथो विभूतिं मम मायया चिता-
मैश्वर्य्यमष्टाङ्गमनुप्रवृत्तम् ।
श्रियं भागवतीं वा स्पृहयन्ति भद्रां
परस्य मे तेऽश्नुवते तु लोके ॥

[भा० । ३ स्क० । २५ अ० । ३७]

न कर्हिचिन्मत्पराः शान्तरूपे
नङ्क्ष्यन्ति नो मेऽनिमिषो लेढि हेतिः ।
येषामहं प्रिय आत्मा सुतश्च
सखा गुरुः सुहृदो दैवमिष्टम् ॥

[ भा० ३ स्क० २५ अ० । ३८ ]

एवमविनश्वरभगवत्तुल्यगुणाविर्भावो भवति दशमी भूमिका। प्रेम्णोऽथ परा काष्ठा । प्राणपरित्यागावाधिविरहासहिष्णुतारूपा । यथा—

गोपीनां परमानन्द आसीद्गोविन्ददर्शने ।
क्षणं युगशतमिव यासां येन विनाभवत् ॥

[ भा० । १० स्क० । १९ अ० । १६ ]

अटति यद्भवानह्नि काननं
त्रुटिर्युगायते त्वामपश्यताम् ।
कुटिलकुन्तलं श्रीमुखञ्च ते
जड उदीक्षतां पक्ष्मकृद् दृशाम् ॥

[ भा० । १० स्क० । ३१ अ० । १५ ]

यर्ह्यम्बुजाक्षापससार भो ! भवान्
कुरून् मधून् वाथ सुहृद्दिदृक्षया ।
तत्राब्दकोटिप्रतिमः क्षणो भवे-
द्रविं विनाक्ष्णोरिव नस्तवाच्युत ! ॥

[ भा० । १ स्क० । ११ अ० । ९ ]

अन्तर्गृहगताः काश्चिद्गोप्योऽलब्धविनिर्गमाः ।
कृष्णं तद्भावनायुक्ता दध्युर्मीलितलोचनाः ॥
दुःसहप्रेष्ठविरह-तीव्रतापधुताशुभाः ।
ध्यानप्राप्ताच्युताश्लेष-निर्वृत्या क्षीणमङ्गलाः ॥
तमेव परमात्मानं जारबुद्ध्यापि सङ्गताः ।
जहुर्गुणमयं देहं सद्यः प्रक्षीणबन्धनाः ॥

[ भा० । १० स्क० । २९ अ० । ९—११ ]

इत्यादि । अनन्तरोल्लासे चैतत्सप्रपञ्चमुदाहरिष्यते प्रेमेत्युपरम्यते ।

लक्षणं भगवद्भक्तेः साधनं सोपपत्तिकम्
सभूमिकं स्वरूपञ्च यथाबुद्धीह वर्णितम् ॥ ३७ ॥

इति श्रीपरमहंसपरिव्राजकाचार्य्य—श्रीमधुसूदनसरस्वती विरचिते भगवद्भक्तिरसायने साधनभूमिभक्तिसामान्यनिरूपणं नाम प्रथम उल्लासः समाप्तः ॥

———